# एतस्य अङ्कस्य विशेषाः

सम्पुटः - २१ सप्टम्बर् - २००३ सञ्चिका - ६



पुराणकथावली

२७



साहसी (वेतालकथा)

१९



मायासरोवरः - १८

१३



विघ्नेश्वरः - २१

४५



## अन्तरङ्गम्



**ग्राहकशुल्कम् -**
अमेरिका-केनडादेशयोः कृते
प्रतिकृतिमूल्यम् - $२
वार्षिकं शुल्कं - $२०
भवदीयं धनं 'Chandamama India Limited' नाम्ना प्रेष्यताम् -
**Subscription Division**
**CHANDAMAMA INDIA LIMITED**
No. 82, Defence Officers Colony,
Ekkatuthangal, CHENNAI - 600 097
E.mail : subscription@chandamama.org

**उपायनीक्रियताम्**
वायुयानेन भारतेतरदेशान् प्रति
वार्षिकं (१२ सञ्चिकाः) - रू.९००/-
भारते रू. १२०/- (बुक्पोस्ट् द्वारा)
भवदीयं धनं D.D.द्वारा धनादेश(M.O.)द्वारा वा
'Chandamama India Limited'
नाम्ना प्रेषणीयम् ।



*संस्थापकौ –*
**चक्रपाणिः नागिरेड्डी च**

# स्वच्छाः विचाराः, स्वच्छः परिसरः च

गतेषु केषुचित् मासेषु प्रपञ्चस्य विविधेषु भागेषु बहवः विलक्षणरोगस्य कारणतः मरणं प्राप्तवन्तः । कश्चन सूक्ष्माणुजीवी एतस्य कारणम् इति वैद्यैः ऊहितम् । आन्ध्रप्रदेशे महाराष्ट्रे च विलक्षणः कश्चन ज्वरः बहूनां बालानां प्राणान् अपाहरत् । एतेन रोगेण ग्रस्तानां जनानां प्राणरक्षणाय वैद्याः चिकित्सालयाः च भगीरथप्रयत्नम् एव अकुर्वन् ।

बहवः एतादृशाः रोगाः वायुजन्याः, जलजन्याः, कलुषिताहारजन्याः वा । स्वच्छता रक्षिता चेत् प्रायः एतादृशानां रोगाणां निवारणं सुकरं स्यात् । प्रत्येकं जनः यदि स्वगृहे परिसरे च स्वच्छतां रक्षेत् तर्हि बहूनां रोगाणाम् आगमनं निवारयितुं शक्यम् । कदाचित् गान्धिवर्यः उक्तवान् आसीत् – ''जनाः स्वगृहस्य स्वच्छतायाः रक्षणे आसक्ताः दृश्यन्ते । किन्तु सा एव आसक्तिः परिसरस्य स्वच्छतायाः रक्षणे न दृश्यते'' इति । स्वपरिसरे स्वच्छतायाः रक्षणं सस्यसम्पदः संरक्षणं च न भवति खलु कष्टकरम् ?

मशकाः जलसङ्ग्रहस्थले वर्धन्ते । क्वचित् प्रवहति जले अपि तेषां वंशाभिवृद्धिः दृश्यते । नदीजलस्य कुल्याजलस्य च प्रवाहे यत् कालुष्यं दृश्यते तस्य कारणं मानवः एव इत्यत्र नास्ति सन्देहः । अतः स्वपरिसरे तादृशानां जलजन्यजीविनाम् उत्पत्तिः यथा न भवेत् तथा जागरूकताश्रयणं सर्वेषां कर्तव्यम् । तत्रापि सुशिक्षिताः जनाः एतद्विषये विशेषावधानं दद्युः ।

महात्मा गान्धिः वदति – ''अन्तः बहिः च अस्माकं निर्मलता स्यात् । सत्यसन्धता स्वच्छताप्रज्ञां जनयति'' इति । यदि वयं स्वच्छविचारवन्तः स्याम तर्हि अस्माकं बाह्ये व्यवहारे अपि स्वच्छता भवेत् । स्वच्छता अपि दैवत्वतुल्या इत्येतत् सत्यं खलु ?

**Visit us at : http://www.chandamama.org**

*सम्पादकः* – **विश्वम्**

भारतनायकस्पर्धायां भागम् ऊढ्वा प्राप्नुवन्तु अपूर्वाणि पारितोषिकाणि

# भारतीयाः नायकाः-२४

अत्र भारतीयपुराणसम्बद्धाः केचन किशोराः उल्लिखिताः । तान् अधिकृत्य स्थितान् प्रश्नान् उत्तरन्तु भवन्तः ।

**समुचितोत्तरदातारः त्रयः पुरस्क्रियन्ते द्विचक्रिकादानेन**

**1** गुरोः धौम्यस्य क्षेत्रं नाशयन्त्याः जलधारायाः स्थगनाय मया भूमौ शयनं कृतम् अवधीरकत्वेन । अग्रे अहं श्रेष्ठः संन्यासी अभवम् । कः अस्मि अहम् ?

..........................................

**2** जन्मसमये एव मम शरीरे अष्टसु स्थलेषु वक्रता आसीत् । अहं मम पितरं कहोडं वन्दिपण्डितात् वादे रक्षितवान् । मम नाम किम् इति किं भवद्भिः ज्ञायते ?

..........................................

**3** अहम् ऋचीकमहर्षेः मध्यमः पुत्रः । विश्वामित्रः मम मातुलः । त्यागबुद्धिकारणतः अहं रक्षितः अभवं बलि-पशुत्वतः । मम नाम किम् ?

..........................................

**4** अहं गुरोः बैदस्य शिष्यः । गुरुपत्न्याः निमित्तं मया पाताललोकात् सुवर्णमयौ कर्णकुण्डलौ आनीतौ । मम नाम किम् ?

..........................................

**5** अहं कौरवपाण्डवयोः गुरोः पुत्रः । अहं धनुर्विद्यानिपुणः चिरञ्जीवी च । मम नाम किम् इति किं भवन्तः जानन्ति ?

..........................................



प्रतिप्रश्नम् उत्तरं लिखन्तु । एतेषु पञ्चसु नायकेषु प्रियतमः कः किमर्थं च इति दशभिः शब्दैः लिखन्तु । **मम प्रियतमः ।**

**नायकः** ..........................................

..........................................

..........................................

..........................................

भागग्रहीतुः नाम ..........................................

वयः .................... कक्ष्या ....................

सङ्केतः ..........................................

..........................................

..........................................

पिन् .................... दूरवाणी ....................

एतं पुटं पृथक्कृत्य प्रेषयन्तु अधोनिर्दिष्टसङ्केताय –

**भारतनायकस्पर्धा-२४**
चन्दमामा इण्डिया लिमिटेड्,
८२, डिफेन्स् आफीसर्स् कालोनी
एक्काडुतङ्गल्, चेन्नै – ६०० ०९७
उत्तरप्रेषणाय अन्तिमदिनाङ्कः – ५, अक्टोबर्, २००३

***नियमाः –***

१. अधिकाष्ट-ऊनचतुर्दशवर्षीयाः एतस्यां स्पर्धायां भागं ग्रहीतुम् अर्हन्ति ।
२. विविधभाषाभिः प्रेषितानि उत्तराणि परिशील्य त्रयः श्रेष्ठाः चीयन्ते । यदि योग्योत्तरदातारः बहवः तर्हि प्रियतमनायकविषये लिखितं वाक्यम् अवलम्ब्य चयनं क्रियते ।
३. निर्णायकानां निर्णयः एव अन्तिमः ।
४. एतं विषयम् अधिकृत्य पत्रव्यवहारः कोऽपि न करणीयः ।
५. विजेतारः पत्रद्वारा सूच्यन्ते ।

पारितोषिकं जेतुं भवतां सर्जनशीलतायाः उपयोगं कुर्वन्तु

भागग्रहणार्थं बालानां कृते आह्वानम्

# बालविशेषे

(नवेम्बर् २००३ सञ्चिका)



**बाललेखकेभ्यः** – आकर्षकशिरोनामयुक्तां, ५०० शब्दयुक्तां स्वलिखितकथां प्रेषयन्तु । कथाः एतासु भाषासु भवितुम् अर्हन्ति – आङ्ग्ल, हिन्दी, वेङ्गालि, ओरिया, मराठि, गुजराती, तेलुगु, कन्नड, तमिल् तथा मलयालम् । एकः अधिकाधिकं तिस्रः कथाः प्रेषयितुम् अर्हति । चिताः कथाः नवेम्बर् २००३ बालविशेषस्य द्वादशभाषासञ्चिकासु अपि प्रकाशयिष्यन्ते ।

**बालकलाविद्भ्यः** – भारतीयपरम्परा-पुराणसाहित्य–इतिहासानां सुपरिचित-घटनावलीम् अधिकृत्य लिखितानि अधिकाधिकं त्रीणि चित्राणि प्रेषयितुम् अर्हन्ति (लिखितविवरणसहितम्) । बालविशेषे प्रकाशनाय चितानां कथानां/विषयाणां विवरणं कर्तुं चिताः कलाविदः चेन्नै प्रति आहूयन्ते । (गमनागमनव्ययः दीयते)

| अन्तिमदिनाङ्कः सप्टम्बर् १५, २००३ |
|---|

## ग्रहणार्थम् आकर्षकाणि पारितोषिकाणि

भावचित्रम् : कथा/चित्र-प्रेषणसमये भवताम् एकं भावचित्रं योजयन्तु ।

(अधः विद्यमानं पत्रं कर्तयित्वा, विवरणं पूरयित्वा भवतां कथया/चित्रेण सह प्रेषयन्तु । एतं सङ्केतं प्रति प्रेषयन्तु – बालविशेषस्य स्पर्धा, चन्दमामा इण्डिया लिमिटेड्, ८२, डिफेन्स् आफिसर्स् कालोनि, एक्कत्तुतङ्गल्, चेन्नै - ६०० ०९७)

नाम ................................ वयः/जन्मदिनाङ्कः ....................

कक्ष्या .................... विद्यालयः ....................................

गृहसङ्केतः ............................................ पिन् कोड् ....................

स्पर्धाविवरणम् –

१. ....................

२. ....................

३. ....................

अहम् अत्र प्रमाणीकर्तुम् इच्छामि यत् मम पुत्रेण/पुत्र्या कृतमेतत् मूलं स्वपरिश्रमेण कृतमस्ति । एतस्य अन्यभाषासु प्रकटनार्थं वैद्युतमाध्यमेषु उपयोगार्थं च चन्दमामायाः पूर्णः अधिकारः अस्ति इत्यत्र मम पूर्णः अङ्गीकारः अस्ति ।

स्पर्धालोः हस्ताङ्कनम् पालकस्य हस्ताङ्कनम्

# अन्धकारः प्रकाशः च

भूपतिः प्रसिद्धः वस्त्रवणिक् । सः वाणिज्यक्षेत्रे विशेषानुभवं प्राप्तवान् आसीत् । तत्कारणतः प्रभूतं धनं गौरवं च सम्पादितम् आसीत् तेन । धनाढ्यः अपि सः सामान्यं वेषम् एव धरति स्म, सामान्यम् एव भोजनं सेवते स्म च । सः कृपणः तु न आसीत् । निर्धनानां साहाय्यं प्रीत्या करोति स्म सः ।

रङ्गः आ बहोः कालतः भूपतेः सेवकः आसीत् । सः स्वामिनं कदाचित् अपृच्छत् - ''श्रीमन् ! भवतः सम्पत्तिः अपारा अस्ति । तस्मात् सुखेन जीवितुम् अर्हति भवान् । तथापि किमर्थं सामान्यं जीवनं याप्यते भवता ?'' इति

भूपतिः मन्दहासमात्रं प्रकटितवान्, उत्तरं किमपि न उक्तवान् ।

कदाचित् भूपतिना वाणिज्ये महती हानिः अनुभूता । सः परमनिर्धनः जातः । स्वामिनः दुरवस्थां दृष्ट्वा कदाचित् रङ्गः अवदत् - ''श्रीमन् ! किम् एतत् विधिविलसितम् ! पूर्वं भवान् धनाढ्यः आसीत् । इदानीं च अकिञ्चनः । इतः परं कथं जीवनयापनम् ?'' इति ।

तदा भूपतिः मन्दहासपूर्वकम् अवदत् - ''रङ्ग ! धनिकत्वं यदा आसीत् तदा अपि अहं सामान्यं जीवनं यापयामि स्म । सुखं बन्धुः इव । कष्टम् एव शाश्वतम् । जीवनम् अन्धकारप्रकाशयोः सम्मिश्रणम् । धनिकत्वसमये विलासमयं जीवनं यदि यापितं स्यात् तर्हि इदानीं जीवनं कष्टकरम् अभविष्यत् । मया तु सामान्यजीवनं यापितम् । अतः इदानीं सरलजीवनयापने न क्लेशः मम । पूर्वम् अहं कष्टभाग्भ्यः धनं यच्छामि स्म । इदानीं तेषु केचन मम साहाय्यम् आचरन्ति'' इति ।

एतदनन्तरम् अल्पे एव काले भूपतिः पुनरपि वाणिज्ये प्रगतिं सम्पादितवान् । तथापि तदीया जीवनदृष्टिः तु सा एव, या च पूर्वम् आसीत् ।





# महादेवस्य आशीर्वादः

शिवपुरस्य ग्रामाधिकारी नागेशः जनान् बहुधा पीडयति स्म । जनाः केचन चिन्तितवन्तः यत् ग्रामाधिकारिणः दुराचारं महाराजः वक्तव्यः इति । नागेशः प्रतिवर्षं महाराज्ञ्यै उपायनानि अर्पयति स्म । एतत् स्मरतां ग्रामीणानां मनसि भावः उत्पन्नः यत् महाराजः उक्तः चेदपि कोऽपि परिणामः न भवेत् इति ।

तेषु एव दिनेषु भद्रः नाम कश्चन अतिथिः कस्यचित् गृहं प्रति आगतः । सः ग्रामीणान् अवदत् – ''नगरे महादेवः नाम कश्चन ज्ञानी अस्ति । सः श्रेष्ठः जनः । तस्य वाणी असाधारणशक्तिमती । अतः तम् अत्र आनयन्तु भवन्तः । तस्मात् भवतां श्रेयः भविष्यति'' इति ।

एतत् अङ्गीकुर्वन्तः ग्रामीणाः चित्राक्ष-नामकं महादेवस्य आनयनाय प्रेषितवन्तः । चित्राक्षः महादेवं ग्रामीणानां कष्टं निवेद्य तं स्वग्रामं प्रति आनीतवान् । महादेवः चित्राक्ष-गृहे एव अवसत् । सः प्रतिदिनं सायं पुराणकथादिकं श्रावयति स्म ।

सः ग्रामीणान् हितं बोधयन् वदति स्म – ''कदाचित् फलस्य कश्चन भागः दुष्यति । तस्य भागस्य खादनात् अस्माकम् आरोग्यं विनश्यति । उत्तमस्य भागस्य खादनात् बुभुक्षा उपशान्ता भविष्यति, आरोग्यं च वर्धिष्यते । जनानां विषये अपि अस्माभिः एवम् एव चिन्तनीयम् । जनानां गुणाः एव ग्रहीतव्याः, दोषाः च उपेक्षणीयाः'' इति ।

एतत् बोधनं जनेषु उत्तमं परिणामम् अजनयत् । ग्रामजनाः परस्परसाहाय्ये उद्युक्ताः जाताः । ग्रामे परस्परप्रीतिः अवर्धत । नागेशस्य विषये अपवचनस्य कथनम् अपि ते न्यूनी-कृतवन्तः । एतस्मात् ग्रामाधिकारी नागेशः अचिन्तयत् यत् महादेवस्य आगमनं वरम् एव जातम् इति ।

कदाचित् चित्राक्षस्य धेनुः नागेशस्य क्षेत्रं प्रविश्य सस्यानि अखादत् । नागेशस्य जनाः

भार्गवः



तां गृहीत्वा गोशालायां बद्धवन्तः । नागेशः सेवकद्वारा चित्राक्षाय वार्ता प्रेषितवान् यत् एतदर्थं भवता शतं रूप्यकाणि दण्डत्वेन दातव्यानि इति ।

चित्राक्षः नागेशं प्रत्यक्षं दृष्ट्वा - ''एतावतः दण्डस्य विधानं सर्वथा न उचितम् । धेन्वाः मूल्यम् अपि ततः अपि अल्पं स्यात् । अतः दण्डः न्यूनीकरणीयः भवता'' इति निवेदितवान् ।

तदा नागेशः क्रोधेन अवदत् - ''एतावान् दण्डः भवता दातव्यः एव । दिनद्वयाभ्यन्तरे दण्डः न दास्यते चेत् प्रतिदिनं भवता दश कशाप्रहाराः प्राप्तव्याः । एतत् न अनुमतं चेत् ग्रामं परित्यज्य गन्तव्यम् । एषा मम आज्ञा'' इति ।

चित्राक्षेण बहुधा प्रार्थितम् । तथापि किमपि प्रयोजनं न जातम् । महादेवः एतत् ज्ञात्वा चित्राक्षम् अवदत् - ''यदि भवतः पक्षः न्याय्यः तर्हि भगवान् एव धनं दास्यति भवते'' इति ।

तस्मिन् एव दिने सायं चित्राक्षः यदा सस्यारोपणाय खनन् आसीत् तदा खनखनेति कश्चन शब्दः श्रुतः । पुनरपि यदा खननं कृतं तदा ताम्रघटः कश्चन प्राप्तः तत्र । घटः सुवर्णनाणकैः पूर्णः आसीत् । चित्राक्षः शतं रूप्यकाणि नागेशाय दण्डरूपेण समर्प्य स्वधेनुं प्रत्यानीतवान् ।

चित्राक्षेण निधिः प्राप्तः अस्ति इति वार्ता नागेशेन अपि ज्ञाता । अतः सः चित्राक्षाय वार्ता प्रेषितवान् - ''भूमौ यः निधिः प्राप्यते सः भवति राज्ञः, न तु भूमेः स्वामिनः । अतः तत् धनं राजप्रतिनिधये मह्यं समर्पणीयम् । तत्र यावत् व्ययितं तावत् सवृद्धि प्रत्यर्पणीयं च'' इति ।

एतत् ज्ञात्वा महादेवः चित्राक्षम् अवदत् - ''अलं भीत्या । ग्रामाधिकारिणं भवान् वदतु यत् ताम्रघटे धनं न आसीत्, प्रत्युत कृष्णाः वृश्चिकाः आसन् इति । भगवतः कृपा यदि स्यात् तर्हि तेन ताम्रघटे वृश्चिकाः एव दृश्यन्ते'' इति । चित्राक्षः महादेवस्य वचनानुगुणम् एव कृतवान् । नागेशेन ताम्रघटे वृश्चिकाः एव दृष्टाः ।

एकदा चित्राक्षस्य प्रतिवेशी रत्नकुमारः कष्टे अपतत् । तस्य भगिनी सुन्दरी आसीत् । नागेशः सानुरोधम् अवदत् यत् एषा मम पुत्राय एव दातव्या इति ।

नागेशस्य पुत्रः परमकुरूपी दुष्टः च



आसीत् । किङ्कर्तव्यताविमूढः रत्नकुमारः स्वस्य कष्टं महादेवं निवेदितवान् ।

तदा महादेवः अवदत् - ''अलं चिन्तया । भवता सुन्दरः एव जामाता प्राप्स्यते काले'' इति ।

अनन्तरदिने एव केचन आगत्य रत्नकुमारं प्रार्थितवन्तः यत् राजोद्योगिने चन्द्राय भवत्पुत्री दातव्या इति । चन्द्रः राज्ञः विश्वासपात्रम् आसीत् । अतः नागेशः एतस्मिन् विषये विघ्नं कर्तुं न शक्तवान् ।

एतस्मात् ग्रामे वार्ता प्रसृता यत् महादेवः यथा वदति तथैव सर्वं घटते इति । ग्रामीणाः स्वकष्टं निवेद्य तस्मात् परिहारोपायं प्राप्नुवन्ति स्म ।

नागेशेन अपि एतत् ज्ञातम् । सः अपि महादेवसमीपं गत्वा अवदत् - ''भवतः आगमनतः अस्माकं ग्रामः पूतः जातः । माम् अपि भवान् आशीर्वादेन अनुगृह्णातु कृपया'' इति ।

तदा महादेवः गम्भीरस्वरेण अवदत् - ''कस्यापि प्रार्थनां पुरस्कृत्य आशीर्वादः न दीयते मया । भगवतः आज्ञायाः अनुगुणम् आशीर्वादः क्रियते । अहम् असहायः अस्मि । अतः अहं भवन्तम् आशीर्वादेन अनुग्रहीतुं न शक्नोमि'' इति ।

''किं भवान् माम् आशीर्वादेन अनुग्रहीतुं न इच्छति ? आशीर्वाददानार्थं भगवान् एव भवन्तं यथा आदिशेत् तथा कर्तुं तु मम सामर्थ्यं नास्ति । किन्तु भगवत्सदृशेन राज्ञा तु तथा कारयितुम् अस्ति एव मम सामर्थ्यम् । राजा एव यदा आदेक्ष्यति तदा किं वा कुर्यात् भवान् ?'' इति वदन् कोपेन ततः निर्गतवान् नागेशः ।

ग्रामीणाः यदा तं विषयं ज्ञातवन्तः तदा ते महादेवसमीपं गत्वा उक्तवन्तः - ''महोदय ! राजानम् अत्र आनाययितुम् अपि सामर्थ्यम् अस्ति तस्य । भवतः आशीर्वादः यदि प्राप्येत तर्हि तस्य दुष्टता इतोऽपि वर्धेत । अतः तस्मै आशीर्वादः मास्तु, कृपया शापः दीयताम्'' इति ।

तदा महादेवः हसन् अवदत् - ''अहम् आशीर्वाददानाय एव मम शक्तेः उपयोगं करोमि, न तु कदाचिदपि शापदानाय । अयोग्याय दीयमानः आशीर्वादः शापायते एव । अतः किञ्चिदपि चिन्तां मा कुर्वन्तु भवन्तः'' इति ।

महादेवविषये राज्ञा अपि श्रुतम् आसीत्

एव । महादेवतः मया अपि आशीर्वादः प्राप्तव्यः इति विचिन्त्य सः शिवपुरं प्रति गमनाय सङ्कल्पं कृतवान्, ग्रामाधिकारिणे नागेशाय वार्ता प्रेषितवान् च ।

ततः दिनद्वयाभ्यन्तरे राज्ञा शिवपुरं प्रति आगतम् । एतन्निमित्तं महती काचित् सभा आयोजिता ।

तस्यां सभायां नागेशः महादेवं यथोचितं सत्कृत्य अवदत् - ''महात्मन् ! भवतः आशीर्वादः विशिष्टः अस्ति । अहं महाराजश्च आशीर्वादेन अनुग्रहणीयौ इति मम विनम्रा प्रार्थना'' इति ।

महादेवः राजानं सविनयं प्रणम्य - ''अन्येषां हिते निरताः आशीर्वादस्य दाने एव समर्थाः, न तु स्वीकारे । महापुरुषाणां सत्कार्यम् एव आशीर्वादायते'' इति अवदत् ।

तदा महाराजः कोपेन अवदत् - ''वयम् आशीर्वादम् इच्छामः । सः दीयते उत न इति स्पष्टतया उच्यताम्'' इति ।

एतत् श्रुत्वा महादेवः विनयेन अवदत् - ''मम आशीर्वादः कदाचित् शापाय अपि भवेत् । एतत्सर्वं जानन् अपि नागेशः यदि मम आशीर्वादं प्राप्तुं सिद्धः तर्हि अहं तस्मै दातुं सिद्धः अस्मि एव'' इति ।

नागेशः अवदत् - ''अहं सिद्धः अस्मि'' इति । ''ग्रामीणानां विषये नागेशेन यादृशः व्यवहारः क्रियते तादृशं फलं द्विगुणिततया प्राप्यते तेन'' इति अवदत् महादेवः ।

एतत् श्रुतवतः नागेशस्य मुखं विवर्णं जातम् । महादेवस्य आशीर्वादः विलक्षणः अस्ति इति जानन् सः महाराजं प्रणम्य प्रार्थितवान् - ''प्रभो, मह्यम् एषः आशीर्वादः न आवश्यकः । एषः आशीर्वादः प्रति-सङ्ग्रहणीयः इति तं वदतु तावत्'' इति ।

नागेशः कीदृशः जनः इत्येतत् एतस्मात् अवगतवान् राजा । अतः सः नागेशं ग्रामाधि-कारिपदतः च्यावयित्वा महादेवं सविनयम् अवदत् - ''एतादृशः दुष्टः मया ग्रामाधिकारि-पदे नियुक्तः यत्, तस्मात् मह्यं दत्तः आशीर्वादः अपि शापायेत कदाचित् । अतः भवतः आशीर्वादस्य प्रार्थनाय धैर्यं न भवति मम । अद्य आरभ्य भवान् एव शिवपुरस्य ग्रामाधिकारी भवतु । अत्रत्यान् आशीर्वादेन अनुगृह्णन् उपकरोतु'' इति ।





# मायासरोवरः

## १८

*[शूरसिंह गणाचार्य च बन्धिनौ कृत्वा सिद्धसाधकः हिरण्यपुरस्य राजानं कनकाक्षं द्रष्टुं गतवान् । हंसरथेन आगतः जयशीलः एकत्र व्याघ्रेण अनुस्त्रियमाणां काञ्चनमालाम् अपश्यत् । जयशीलः व्याघ्रात् काञ्चनमालाम् अरक्षत् । तदवसरे वृक्षाणां पृष्ठतः स्थितः मायासरोवरेश्वरः कमलनालैः निर्मितं पाशं जयशीलस्य कण्ठं लक्ष्यीकृत्य क्षिप्तवान् । तदनन्तरम् ....]*

जयशीलः स्वस्य कण्ठे पाशस्य पातनं दृष्ट्वा क्षणं यावत् आश्चर्यचकितः । सः मुखं परिवर्त्य दृष्टवान् । अनतिदूरे स्थितौ मायासरोवरेश्वरः मकरकेतुः च तेन दृष्टौ । केन उद्देशेन एतत् कृतम् इति अवगतं तेन । सः स्वकण्ठे लग्नं पाशं खड्गेन छेत्तुम् इष्टवान् । किन्तु किमपि विचिन्त्य सः तं प्रयत्नं स्थगितवान् ।

मायासरोवरेश्वरः स्वहस्ते स्थितां रज्जुं किञ्चित् आकृष्य अवदत् - ''भवान् एव खलु जयशीलनामकः महावीरः ? रज्जुं खड्गेन छेत्तुं खलु इष्टवान् भवान् ? तत् किमर्थं न कृतम् ?'' इति ।

''भवान् एव खलु मायासरोवरेश्वरः नाम ? भवान् मम कण्ठे पाशं पातितवान् । एवं कृतवता भवता मम प्राणाः अपहरणीयाः खलु आसन् ? भवता किमर्थं तथा न कृतम् ?'' इति अवदत् जयशीलः ।



"अहं मायासरोवरस्य राजा अस्मि । मया केनचित् मानवेन पृष्टस्य प्रश्नस्य उत्तरं दातव्यं नास्ति" इति अवदत् मायासरोवरेश्वरः ।

एतत् श्रुत्वा नितरां क्रुद्धः जयशीलः किमपि वक्तुं यावत् उद्युक्तः तावता राजकुमारी काञ्चनमाला अवदत् - "मातुल ! भवान् हंसरथात् पतनानन्तरम् अपि अक्षतः अस्ति इति तु महते सन्तोषाय । भवता एतस्य जयशीलस्य कापि हानिः न करणीया । यतः एषः मां व्याघ्रात् रक्षितवान् अस्ति" इति ।

"वत्से ! मया तत्सर्वं प्रत्यक्षं दृष्टम् एव । अहम् एतस्य वधं कर्तुं न इच्छामि । एतं सजीवं मायासरोवरं प्रति नेतुम् इच्छामि । अतः एव एषः न मारितः मया" इति अवदत् मायासरोवरेश्वरः ।

काञ्चनमाला जयशीलं पश्यन्ती अवदत् - "मम मातुलः भवतः हानिं कर्तुं सर्वथा न इच्छति । अतः भवता स्वयं किमर्थम् अस्माभिः सह न आगन्तव्यम् ?" इति ।

"अत्र मम इच्छायाः का वा प्रसक्तिः ? एषः मायासरोवरेश्वरः मां पराजित्य बन्दीरूपेण नेतुम् इच्छति । किन्तु सः न जानाति यत् अहं यदि इच्छामि तर्हि एतं पाशं लीलया छित्त्वा गन्तुं शक्नोमि इति" इति अवदत् जयशीलः ।

जयशीलस्य एतानि वचनानि श्रुत्वा मायासरोवरेश्वरः मकरकेतुम् अवदत् - "मकरकेतो, एषः पलायनं यथा न कुर्यात् तथा जागरूकतां वहतु भवान् । एतदभ्यन्तरे अहं पाशरज्जुं किञ्चित् बलात् आकृष्य एतं ज्ञापयिष्यामि यत् बलात्कारजनितं मरणं कथं भविष्यति इति" इति ।

तदा मकरकेतुः स्वस्य मुखभावेन एव अनिच्छां प्रकटितवान् । किन्तु तेन स्वस्य राज्ञः आदेशः पालनीयः एव आसीत् । अतः सः स्वस्य अश्वं जयशीलदिशि प्रेरितवान् । एतत् दृष्ट्वा काञ्चनमाला उच्चैः चीत्कृतवती । सा जयशीलस्य कण्ठे लग्नां रज्जुं हस्ताभ्यां गृहीत्वा - "मातुल ! यदि एतां रज्जुम् आकृष्य भवान् एतस्य मारणार्थं प्रयासं कुर्यात् तर्हि अहम् एताम् एव रज्जुं कण्ठे योजयित्वा मरणं प्राप्स्यामि" इति आतङ्कमिश्रितेन स्वरेण अवदत् ।

"अहो, अल्पे एव काले कथा एतावत्पर्यन्तं प्रवृद्धा अस्ति !" इति साश्चर्यम् उक्त्वा मायासरोवरेश्वरः द्वित्रान् क्षणान् विचिन्त्य पुनः अवदत् - "जयशील ! कण्ठे

लग्नां पाशरज्जुं खड्गेन खण्डयेत् भवान् । किन्तु एतस्य जलग्रहस्य पादाघातात् तु भवान् आत्मनः रक्षणं कर्तुं न शक्नुयात् एव । एषः जलग्रहः भवन्तं पादैः विमर्द्य यमलोकं प्रेषयिष्यति'' इति ।

''भवतु नाम । भवतः प्रयत्नः प्रचलतु कामम्'' इति उपेक्षया उक्त्वा जयशीलः कण्ठे लग्नां पाशरज्जुं छेत्तुम् उद्युक्तः । तावता मकरकेतुः मन्दस्वरेण अवदत् - ''जयशील ! अलम् अविचिन्तितेन व्यवहारेण । सरोवरेश्वरः भवन्तं माया-सरोवरं नेतुम् इच्छति यत् तस्य विशेष-कारणम् अस्ति । अन्यच्च, भवान् अपि मायासरोवरं गन्तुम् इच्छति ननु ?'' इति ।



मकरकेतुः मम हितम् एव इच्छन् एवं वदति इति अवगतवान् आसीत् जयशीलः । अतः सः मायासरोवरेश्वरम् अवदत् - ''अस्तु, महोदय ! मया अङ्गीक्रियते यत् भवान् मत्तोऽपि बलवत्तरः इति । अहं भवतः अधीनः अस्मि इदानीम् । मद्विषये कीदृशः व्यवहारः क्रियते भवता ?'' इति ।

''भवान् एवं स्वस्य पराजयं यत् अङ्गीकरोति तस्य पृष्ठतः द्रोहचिन्तनं किमपि नास्ति खलु ?'' इति जयशीलम् अपृच्छत् मायासरोवरेश्वरः तदीयं मुखम् एव परीक्षादृष्ट्या परिशीलयन् ।

''यः दुर्बलः अस्ति सः द्रोहमार्गं चिन्तयेत् । अहं कीदृशः जनः इति एतावता मकरकेतुः अवगतवान् अस्ति एव'' इति मायासरोवरेश्वरम् उक्त्वा - ''अये मकर-केतो, मम कथनं सत्यं खलु ?'' इति मकर-केतुम् अपृच्छत् जयशीलः ।

''मया इतः पूर्वम् एव महाराजः निवेदितः यत् भवान् कश्चन महासत्त्वः अस्ति इति'' इति उक्तवान् मकरकेतुः ।

''जयशील ! भवतः सत्त्वं कीदृशम् इति मायासरोवरस्य प्राप्तेः अनन्तरम् अहं परि-शीलयिष्यामि । इदानीं तु भवान् अस्मान् अनुसरतु'' इति उक्त्वा मायासरोवरेश्वरः मकरकेतुं पश्यन् - ''वयम् इतः पूर्वं कञ्चित् जलवृकराक्षसं दृष्टवन्तः खलु ? सः, तत्सदृशाः अन्ये दुष्टाः च न जाने, कीदृशं दुष्टकार्यं कुर्वन्तः स्युः इति'' इति अवदत् ।

''भोः, इदानीम् अपि मम कण्ठे पाशरज्जुः अस्ति यत् तस्य को वा उद्देशः ?'' इति पृष्टवान् जयशीलः ।

मायासरोवरेश्वरस्य उत्तरकथनात् पूर्वम् एव काञ्चनमाला मन्दहासपूर्वकं जयशीलस्य



मकरकेतुः - ''किम् एषः पादाभ्याम् एव गच्छन् अस्मान् अनुसरेत् ?'' इति ।

''काञ्चनमाला मया सह जलग्रहस्य उपरि उपवेक्ष्यति । भवान् जरशीलः च अश्वम् आरुह्य आगच्छताम्'' इति सूचितवान् मायासरोवरेश्वरः ।

काञ्चनमाला पुनरपि मायासरोवरं प्रति नीयते इति विषयं ज्ञात्वा जयशीलः आश्चर्यचकितः जातः । सः मकरकेतुम् अवदत् - ''मकरकेतो ! मायासरोवरं प्रति काञ्चनमालायाः प्रतिनयनम् अहं कथमपि न सहे । मया कनकाक्षराजाय वचनं दत्तम् अस्ति यत् अपहृतौ भवतः पुत्रौ अचिरात् एव मया आनेष्येते इति'' इति ।

मायासरोवरेश्वरः क्रोधपूर्णया दृष्ट्या जयशीलम् अपश्यत् । काञ्चनमाला अपि असन्तोषपूर्णया दृष्ट्या जयशीलं पश्यन्ती - ''अहं मम सहोदरः च अरण्ये अपहृतौ इति सत्यं चेदपि आवाम् इदानीं कस्यापि बन्धने न स्वः । अग्रजेन विना अहं कथं वा पितुः समीपं गच्छेयम् ? यदि भवतः शक्तिः स्यात् तर्हि मम अग्रजं बन्धविमुक्तं करोतु'' इति उक्त्वा जलग्रहम् आरुह्य उपविष्टवती ।

एतत् दृष्ट्वा जयशीलः आश्चर्यम् अनुभवन् - ''मकरकेतो, एतत् सर्वं मम महते आश्चर्याय । राज्ञः पुत्रयो अपहरणं, मायासरोवरः इत्यादिकं सर्वम् अवास्तविकं न स्यात् खलु ?'' इति अपृच्छत् ।

''भवान् मम अश्वम् आरोहतु । मायासरोवरस्य प्राप्तेः अनन्तरं सर्वं स्वयं ज्ञातं भविष्यति'' इति उक्तवान् मकरकेतुः ।

कण्ठे स्थितां रज्जुम् अपनीय कोमलस्वरेण अवदत् - ''एषा न पाशरज्जुः, प्रत्युत मम मातुलेन भवतः कण्ठे धारिता कमलनालमाला'' इति ।

'कथा अचिरात् एव समाप्तिम् एष्यति इति भाति । वराकी पद्ममुखी दौर्भाग्यवती अस्ति । यद्ययं जलवृकराक्षसराजस्य संहारे मम साहाय्यं कुर्यात् तर्हि महान् उपकारः कृतः भवेत्' इति अचिन्तयत् मायासरोवरेश्वरः ।

''महाराज ! आज्ञाप्यताम् । इदानीं मया किं करणीयम् ?'' इति अपृच्छत् मकरकेतुः ।

''इदानीं वयं मायासरोवरं गच्छाम । भवान् अग्रेसरः भवतु'' इति उक्तवान् मायासरोवरेश्वरः ।

जयशीलं कटाक्षेण पश्यन् अपृच्छत्

जयशीलः विना प्रतिवचनं मकरकेतो अश्वम् आरुह्य उपविष्टः । मायासरोवरेश्वरः जलग्रहं प्रेरितवान् अग्रे गमनाय । मकरकेतोः अश्वः जलग्रहम् अनुसृतवान् वेगेन ।

एतदवसरे एव जयशीलः झटिति सिद्धसाधकं स्मृतवान् । सः अचिन्तयत् - 'सिद्धसाधकः अपि मया सह अरण्ये बहूनि कष्टानि सोढवान् अस्ति । अकस्मात् मम अदर्शनात् सः किं वा चिन्तयेत् ? मां मृतं न भावयेत् खलु सः' इति ।

एवं जयशीलः यदा चिन्तयन् आसीत् तस्मिन् एव समये अश्वदलस्य नेता वीरसेनः सिद्धसाधकम् अरण्यस्थस्य कनकाक्षराजस्य शिबिरं प्रति नयन् आसीत् । राजा सिद्धसाधकम् अभिज्ञाय अपृच्छत् - ''मम पुत्रयोः अन्वेषणाय भवता सह गतः सः साहसी तरुणः जयशीलः क्व ? बहूनि दिनानि अतीतानि चेदपि भवद्भ्यां न प्रत्यागतम् इत्यतः अहं राज्यभारं मन्त्रिषु निक्षिप्य पुत्रयोः अन्वेषणाय स्वयम् अरण्यम् आगतवान् अस्मि'' इति ।

''महाराज ! भवतः पुत्रस्य पुत्र्याः च अपहरणं ये कृतवन्तः ते मायासरोवरपरिसरे निवसन्ति । तत्रत्याः जले स्थले च विना क्लेशं जीवितुम् अर्हन्ति । अस्माभिः तत्रत्याः केचन गृहीताः सन्ति । तेषां राजा मायासरोवरेश्वरः नरभक्षिणाम् अधीनः जातः आसीत् । यावत् अहं तं स्वाधीनीकर्तुम् उद्युक्तः तावता सः कथमपि पलायितः । तथापि चिन्ता तु करणीया नास्ति । मायासरोवरीयः, कश्चन जलवृकः च मम



सेवकौ जातौ स्तः । एतयोः साहाय्येन वयं ज्ञातुं शक्नुयाम यत् मायासरोवरः कुत्र अस्ति इति'' इति अवदत् सिद्धसाधकः ।

''एवम् ! भवतु नाम'' इति उक्त्वा राजा कनकाक्षः शिलागदां स्कन्धेन वहन्तं सिद्धसाधकस्य पृष्ठतः स्थितं जलवृकं पश्यन् अपृच्छत् - ''जयशीलः कुत्र अस्ति इदानीम् ?'' इति ।

''जयशीलः मायासरोवरेश्वरस्य द्वाभ्यां सहचराभ्यां सह हंसरथे उपविश्य प्रयाणं कुर्वन् एतस्मिन् एव अरण्ये मायासरोवरेश्वरस्य अन्वेषणं कुर्वन् अस्ति । मम हस्तात् कथमपि आत्मानं मोचयित्वा मायासरोवरेश्वरः पलायितवान् इत्येतत् जयशीलः न जानाति'' इति अवदत् सिद्धसाधकः ।

''हंसरथः नाम कः ?'' इति आश्चर्येण पृष्टवान् राजा कनकाक्षः । तत्र उपस्थिताः

राजोद्योगिनः अपि आश्चर्यम् अनुभूतवन्तः ।

तस्मिन् एव समये ततः अनतिदूरे वृक्षसमूहस्य अधः प्रचलन् कश्चन कोलाहलः तैः श्रुतः । तत्र सैनिकैः सह नरभक्षिणः वार्तालापं कुर्वन्तः आसन् । ते वदन्तः आसन् - ''वयं कमपि रहस्यविषयं ज्ञातवन्तः स्मः । तां च वार्तां नरवानरस्य उपरि उपविश्य प्रयाणं कुर्वन्तं भूतनाथं वक्तुम् इच्छामः'' इति ।

सैनिकाः तान् पृष्टवन्तः - ''के भवन्तः ? कुतः आगतं भवद्भिः ?'' इति ।

सिद्धसाधकः एकं राजसेवकं सूचितवान् - ''भवान् तत्र गत्वा कोलाहलकारणं ज्ञात्वा तौ मत्समीपम् आनयतु'' इति ।

अल्पे एव काले तौ नरभक्षकौ सिद्धसाधकसमीपम् आगत्य तं साष्टाङ्गं नमस्कृत्य - ''महानुभाव ! यदि भवान् अस्माकं नायकं गणाचार्यं च बन्धमुक्तं कुर्यात् तर्हि वयं किञ्चन रहस्यं वदेम'' इति ।

सिद्धसाधकः अवगतवान् यत् एते किमपि रहस्यं जानन्ति इति । अतः सः जलवृकराक्षसम् आदिष्टवान् - ''शूरसिंहं गणाचार्यं च बन्धमुक्तौ कृत्वा मत्पुरतः आनयतु'' इति । जलवृकराक्षसः एतम् आदेशं पालयन् तौ बन्धमुक्तौ कृत्वा हस्ताभ्याम् उन्नीय सिद्धसाधकस्य पुरतः उपस्थापितवान् । तदा सिद्धसाधकः तान् नरभक्षकान् अपृच्छत् - ''भोः, भवद्भिः ज्ञातं तत् रहस्यं किम् ?'' इति ।

''भूतनाथवर्य ! मकरमुखं, विलक्षणगजम् आरुह्य प्रयाणरतं च अन्विष्यन्तः वयम् अरण्ये सञ्चरन्तः आस्म । तदा वयम् एकं पुरुषं तरुण्या कयाचित् सह स्थितं दृष्टवन्तः दूरे । मकरमुखस्य गजारूढस्य च ग्रहणम् अस्माकं शक्तिबाह्यम् आसीत् इत्यतः वयं मौनेन गुल्मानां पृष्ठतः स्थित्वा सर्वं परिशीलयन्तः आस्म । तौ मकरमुखगजारूढौ तं पुरुषं तां तरुणीं च स्ववाहने उपवेश्य पर्वतदिशि निर्गतवन्तौ । हंसरथम् आरूढाः अपि केचन अस्माभिः दृष्टाः । इतः पञ्चक्रोशदूरे पूर्वस्यां दिशि ते केषाञ्चित् अन्वेषणं कुर्वन्तः सन्ति'' इति अवदन् ते नरभक्षकाः ।

*- (अनुवर्तते)*



# वेताल-कथा

## साहसी

स्वीकृतं कार्यं त्यक्तुम् अनिच्छन् त्रिविक्रमः पुनरपि वृक्षस्य समीपं गत्वा शवं स्कन्धे आरोप्य मौनेन श्मशानाभिमुखं प्रस्थितवान् यथापूर्वम् । तदा शवान्तर्गतः वेतालः अवदत् - ''अये राजन् ! मम केशं कम्पयितुम् अपि कोऽपि न शक्नोति इति चिन्तयन् इव भवान् एतस्मिन् घोरे श्मशानमार्गे निर्भयतया सञ्चरति । एवं कुर्वतः भवतः लक्ष्यं किं स्यात् ? यः भवन्तम् एतस्मिन् कार्ये प्रवर्तितवान् सः कार्यसिद्धेः अनन्तरं स्ववचनं पालयेत् एव इति किं भवान् चिन्तयति ? पूर्वं महेन्द्रगिरिराज्यस्य राजकुमारी घोषितवती आसीत् - महासाहसिनम् अहं परिणेष्यामि इति । तथापि राक्षसात् राज्यं रक्षितवन्तम् अपि



कश्चित् तरुणं सा न परिणीतवती । भवति विवेकं जागरयितुं तां कथां विस्तरेण श्रावयामि । मार्गायासपरिहाराय अपि भवेत् सा कथा । तां श्रद्धया शृणोतु तावत्'' इति ।

अनन्तरं वेतालेन कथा आरब्धा -

पूर्वं मधुसूदनः नाम राजा महेन्द्रगिरि पालयति स्म । माधवी तस्य एकमात्रपुत्री । सा साहसप्रिया । सा वदति स्म - 'यः महत् साहसकार्यं करोति तम् एव अहं परिणेष्यामि । तस्य निर्धनत्वं धनिकत्वं वा अहं न पश्यामि' इति ।

राज्ये एषा वार्ता प्रसृता । माधवीं परिणेतुम् इच्छन्तः युवकाः साहसकार्येषु प्रवृत्ताः जाताः । कश्चन तरुणः उन्नतात् पर्वतशिखरात् कूर्दित्वा विना व्रणं पर्वतमूलं प्राप्तवान् । अपरः झञ्झावातमये समुद्रे नौकां चालितवान् । अन्यः रिक्तहस्ततया अरण्यं गत्वा केनचित् भल्लूकेन सह युद्धं कृत्वा तं वाहनत्वेन परिकल्प्य नगरं प्रत्यागतवान् ।

एवं बहवः तरुणाः विविधानि साहस-कृत्यानि कृतवन्तः । तान् उद्दिश्य राजकुमारी उक्तवती - ''भवतां साहसं निश्चयेन प्रशंसनीयम् अस्ति । किन्तु एतादृशैः न कस्यापि उपकारः जातः'' इति उक्त्वा एकैकस्मै अपि कानिचन सुवर्णनाणकानि दत्त्वा प्रेषितवती ।

एतस्मिन् एव कालखण्डे कश्चन राक्षसः महेन्द्रगिरिराज्यं प्रविष्टवान् । कस्यचित् वटवृक्षस्य अधः सः वासम् आरब्धवान् । सः तेन मार्गेण गच्छन्तौ शिव-शङ्करनामकौ तरुणौ गृहीत्वा अवदत् - ''भोः, अहं राक्षसः अस्मि । तथापि न मांसाहारी । अहं भवतोः अन्यतरं मत्समीपे स्थापयिष्यामि । अपरः नगरं गत्वा मदर्थं यावत् आवश्यकं तावत् आहारम् आनयेत् । दिनाभ्यन्तरे एतत् कार्यं साधनीयम् । यदि दिनाभ्यन्तरे मया आहारः न प्राप्स्यते तर्हि मत्समीपे स्थितः यमलोकं प्रति प्रेषयिष्यते'' इति ।

शङ्करः राक्षससमीपे अतिष्ठत् । शिवश्च राक्षसाय आहारम् आनेतुं समीपस्थान् ग्रामान् गतवान् । सः ग्रामीणान् प्रवृत्तं सर्वम् उक्त्वा शकटमितान् आहारपदार्थान् स्वीकृत्य अरण्यं प्रत्यागतवान् ।

एतस्मात् नितरां सन्तुष्टः राक्षसः शङ्करं बन्धविमुक्तं कृत्वा अवदत् - ''अहम् अत्र अस्मि इति राजा वक्तव्यः भवद्भ्याम् । प्रतिदिनम् एतावान् आहारः राज्ञा मह्यं

प्रेषणीयः नियततया । यस्मिन् दिने मया आहारः न प्राप्स्यते तस्मिन् दिने अहं राजधानीं प्रविश्य सर्वस्य नाशनं करिष्यामि'' इति ।

तौ युवकौ ततः निर्गत्य एतं सन्देशं राजानम् उक्तवन्तौ । सेनासहितं गत्वा तस्य राक्षसस्य संहारः करणीयः इति राज्ञा यदा चिन्तितं तदा माधवी उक्तवती - ''राक्षसः कश्चन शाकाहारी अस्ति इति तु आश्चर्यकरः विषयः । एतस्य रहस्यं किञ्चन स्यात् । तत् ज्ञातुं साहसिभिः एव शक्यम् । अत्रास्ति साहसिनां परीक्षा इति भवान् राज्ये घोषयतु । प्रतिदिनं तस्मै आहारं प्रेषयतु नियततया'' इति ।



पुत्र्याः अपेक्षायाः अनुगुणं राज्ञा घोषणा कारिता । एतां श्रुत्वा केचन राक्षससमीपं गत्वा वार्तालापं कृतवन्तः । तदा राक्षसः तान् अवदत् - ''अहं देवता अस्मि, शापकारणतः च राक्षसः जातः अस्मि । मां शापमुक्तं कर्तुं सामान्यैः न शक्यते । महेन्द्रगिरेः उत्तरस्यां दिशि किञ्चन जीर्णं विष्णुमन्दिरम् अस्ति । तस्मिन् कश्चन सुरङ्गमार्गः अस्ति । सः घोरैः विषसर्पवृश्चिकादिभिः आकीर्णः अस्ति । तम् अतिक्रम्य गतं चेत् एकः अग्निकुण्डः प्राप्यते । तत्र प्रवेशः कृतः चेत् साक्षात् पाताललोकः प्राप्यते । तस्मिन् कश्चन अजगरः अस्ति । दर्शनमात्रेण सः मानवं गिलति । तस्य उदरे एकम् अङ्गुलीयकम् अस्ति । तत् आनीय मम अङ्गुल्यां धारितं चेत् मया शापात् मुक्तिः प्राप्स्यते'' इति ।

केचन तरुणाः एतत्सर्वं श्रुत्वा विना वचनं ततः प्रतिगतवन्तः । अन्ये केचन विष्णुमन्दिरपर्यन्तं गतवन्तः । अन्ये केचन सुरङ्गं प्रविश्य सर्पाणां फूत्कारं श्रुत्वा प्रतिगतवन्तः । एकः सुरङ्गस्य अन्तः गतवान् । किन्तु अल्पे एव काले तस्य आर्तनादः श्रुतः । तदीयः शवः बहिः क्षिप्तः अभवत् ।

सत्यवान् तस्यैव राज्यस्य कश्चन ग्रामवासी । सः निर्धनः । सः शास्त्राणि अधीतवान् आसीत् । किन्तु नितरां भीरुस्वभावः तस्य । परिश्रमेण जीवितुम् इच्छति सः । अन्धकारात् पिशाचेभ्यः च भीतः सः । कश्चित् कलहम् आरभते चेदपि भीतिः तस्य । अतः जनाः तं 'महाभीरुः' इति वदन्ति स्म ।

कदाचित् जयद्रथः नाम कश्चन तरुणः



तेन मिलितः । वस्तुतः सः सत्यवन्तम् अन्विष्यन् आगतः आसीत् ।

जयद्रथः राजवंशीयः । सः जानाति स्म यत् माधव्याः परिणयाय यत् साहसकार्यं करणीयं तदर्थं मम शक्तिः नास्ति इति । अतः सः मन्त्रशक्तेः साहाय्यं स्वीकर्तुम् इष्टवान् । तदर्थं सः कञ्चित् प्रसिद्धं सिद्धयोगिनम् अपश्यत् । जयग्रथस्य इच्छां श्रुत्वा सः सिद्धयोगी - ''मम समीपे एकं तायकम् अस्ति । तत् धृतवान् जनः तिसृभ्यः आपत्तिभ्यः आत्मानं रक्षितुं शक्नोति । किन्तु एतत् तायकं सर्वेषाम् उपकारकं न भवति । धरणानन्तरं यस्य हस्ते एतत् हरितवर्णतां प्राप्नोति सः भवदुक्तस्य कार्यस्य साधकः भवितुम् अर्हति'' इति उक्त्वा एकं कृष्णवर्णीयं तायकं तस्य हस्ते बद्धवान् । किन्तु तेन वर्णपरिवर्तनं न जातम् । एतस्मात् जयद्रथः नितरां निराशः ।

तदा संन्यासी पुनः अवदत् - ''अलं निराशतया । सर्वासाम् अपि समस्यानां कश्चन परिहारः भवति एव । एतत् धृत्वा भवान् राज्ये अटतु । यस्य उपस्थित्या एतत् नीलवर्णतां प्राप्नोति तस्य हस्ते एतत् बध्नातु । तदा यदि एतत् हरितवर्णतां प्राप्नोति तर्हि तं राक्षसपीडातः मुक्तिं प्राप्तुम् उपयुनक्तु । भवतः बुद्धिशक्तेः उपयोगः एव फलप्राप्तौ सहायकं भवितुम् अर्हति'' इति ।

सत्यवतः उपस्थितौ तायकं नीलवर्णतां प्राप्नोत् । तदा जयद्रथः सत्यवन्तं सर्वम् उक्तवान् ।

सर्वं श्रुत्वा सत्यवान् भीत्या अवदत् - ''सर्पेभ्यः अग्नितः च नितरां भीतिः मम । तेषां नामश्रवणमात्रात् एव अहं बिभेमि । नितरां भीरुः अहम् । अतः भवदुक्तं कार्यं कर्तुं न शक्नोमि अहम्'' इति ।

जयद्रथः यदा सत्यवतः हस्ते तायकं बद्धवान् तदा तत् हरितवर्णतां प्राप्नोत् । एतत् दृष्ट्वा सत्यवान् नितराम् आश्चर्यचकितः ।

एतदनन्तरं जयद्रथः सत्यवतः अङ्गीकारं प्राप्तुं सामदानभेदादीनाम् उपायानाम् आश्रयणम् आरब्धवान् । सः सत्यवन्तम् अवदत् - ''महेन्द्रगिरेः भविष्यं भवन्तम् अवलम्बते । यदि भवान् एतत् कार्यं कुर्यात् तर्हि आजीवनं सुखेन जीवेत् । यदि भवान् निराकृतिं प्रदर्शयेत् तर्हि राजानम् उक्त्वा दण्डनं कारयिष्यामि'' इति । एतावत् उक्त्वा स्वकोषे स्थितां छुरिकां दर्शितवान् सः ।

भीतः सत्यवान् तायकस्य धारणम्

अङ्गीकृतवान् । तायकस्य धरणात् तस्मिन् धैर्यम् उत्पन्नम् । सः जयद्रथेन सह गत्वा सुरङ्गं प्रविष्टवान् । विषसर्पाः तं न अस्पृशन् । तद्विषये अग्निः शीतलः जातः । सः अग्निकुण्डं प्रविश्य पातालम् अगच्छत् । तत्र अजगरः मूर्तिवत् स्थितः आसीत् । तस्य उदरं प्रविश्य सः अङ्गुलीयकं स्वीकृतवान् । अनन्तरं किं प्रवृत्तम् इति सः न जानाति । क्षणानन्तरं सः जयद्रथस्य पुरतः स्थितः आसीत् ।

जयद्रथः तत् अङ्गुलीयकं प्राप्य सन्तुष्टः । सः सत्यवन्तम् अवदत् - 'आगच्छतु । राक्षससमीपं गच्छाव' इति । सत्यवान् राक्षसस्य नामश्रवणात् एव भीतः सन् - ''तिसृभ्यः विपत्तिभ्यः अहं रक्षितः । इदानीम् एतस्य तायकस्य महिमा अपगतः स्यादपि । अतः राक्षससमीपं गमनाय मम धैर्यं नास्ति'' इति अवदत् ।

तदनन्तरं जयद्रथः माधव्याः समीपं गत्वा अङ्गुलीयकं तस्यै दत्त्वा अवदत् - ''एतत् राक्षसाय दत्तं चेत् सः शापविमुक्तिं प्राप्स्यति । देशश्च राक्षसपीडारहितः भविष्यति'' इति ।

अङ्गुलीयकं प्राप्य नितरां सन्तुष्टा माधवी जयद्रथेन पित्रा च सह राक्षससमीपं गतवती । राक्षसः यदा अङ्गुलीयकं धृतवान् तदा तेन दिव्यं रूपं प्राप्तम् । सः माधवीम् अवदत् - ''यः भवत्याः पतिः भवितुम् इच्छति तेन अपरम् अपि साहसं करणीयम् । इतः क्रोशदूरे कश्चन गभीरः कूपः अस्ति । तस्मिन् रत्नखचितं कङ्कणम् अस्ति । तत् यः



भवत्यै आनीय दास्यति सः एव भवत्याः पतिः भवितुम् अर्हति । तस्मिन् कूपे त्रयः पिशाचाः सन्ति । सामान्यः तान् सम्मुखीकर्तुं न अर्हति । तेषां सम्मुखीकरणं विना कङ्कणं प्राप्तुं न शक्यते'' इति ।

दिव्यपुरुषस्य वचनं श्रुत्वा आश्चर्यं प्रकटयन्ती माधवी अवदत् - ''जयद्रथ ! असम्भवम् अपि कार्यं साधितं भवता । रत्नकङ्कणम् अपि यदि भवान् आनेष्यति तर्हि अहं भवन्तं परिणेष्यामि । वरमालां गृहीत्वा भवतः प्रतीक्षां करोमि'' इति ।

प्रत्युत्तरं किमपि अनुक्त्वा माधव्याः अनुज्ञां प्राप्य जयद्रथः ततः निर्गतवान् । सत्यवतः समीपं गत्वा कङ्कणवृत्तान्तं श्रावयित्वा तदीयं साहाय्यं प्रार्थितवान् ।

तदा भीतिं प्राप्य सत्यवान् अपृच्छत् - ''तस्मिन् कूपे किं कङ्कणमात्रम् अस्ति, उत



अन्यत् किमपि ?'' इति ।

''कङ्कणमात्रम् एव अस्ति इति मया श्रुतम्'' इति अवदत् जयद्रथः ।

''भवतः वचने विश्वासः नास्ति मम । यदि कूपे कङ्कणमात्रम् एव स्यात् तर्हि एतत् कार्यं भवान् एव कर्तुम् अशक्ष्यत् खलु ?'' इति अवदत् सत्यवान् ।

तदा जयद्रथः अवदत् - ''राक्षसेन उक्तम् अस्ति यत् यः अङ्गुलीयकम् आनेतुं समर्थः जातः तेनैव कङ्कणम् आनेतुं शक्यते इति । अतः मया भवत्समीपम् आगतम्'' इति ।

जयद्रथस्य वचने विश्वसन् सत्यवान् गभीरकूपस्य समीपं गतवान्, कूपं प्रविष्टवान् च । कूपे कोऽपि पिशाचः तं न अपीडयत् । कूपतले रत्नखचितं कङ्कणं दृष्टम् । तत् स्वीकृत्य निरापदम् उपरि आगतवान् सत्यवान् ।

रत्नकङ्कणं दृष्ट्वा नितरां सन्तुष्टः जयद्रथः अवदत् - ''मम कथनम् अनुसृत्य कार्यं कुर्वन् भवान् असाध्यम् अपि साधितवान् । मया चिन्तितम् आसीत् यत् विष्णुमन्दिरं प्रविष्टः भवान् सजीवं न प्रत्यागच्छेत् इति । किन्तु भवान् साङ्गुलीयकं प्रत्यागतः । कूपं प्रविष्टवन्तं भवन्तं पिशाचाः गिलेयुः इति मया भावितम् आसीत् । तत्रापि भवान् निरापदं प्रत्यागतः । सर्वं कार्यं धैर्येण कृतं भवता । महासाहसी भवान्'' इति ।

यावत् जयद्रथस्य कथनं न समाप्तं तावता राजकुमारी राज्ञा मधुसूदनेन, कैश्चित् सैनिकैः च सह तत्र आगता ।

क्रोधपूर्णया दृष्ट्या जयद्रथं पश्यन्ती माधवी उक्तवती - ''दिव्यपुरुषः अपरं साहसकार्यं कर्तुं यदा आदिष्टवान् तदा मया अवगतं यत् भवान् प्रायः वञ्चकः इति । मम वचनं कोऽपि न शृणोति इति भवता चिन्तितं स्यात् । भवता उक्तं सर्वं मया श्रुतम् अस्ति । भवान् अस्ति महावञ्चकः'' इति ।

तदा आत्मानं समर्थयन् जयद्रथः अवदत् - ''राजकुमारि ! यदि अहं न स्यां तर्हि किम् एषः सत्यवान् साहसकार्यम् अकरिष्यत् ? मया राक्षसात् देशः रक्षितः । अतः देशोपकारः कृतः मया । भवतीं परिणेतुम् अहम् एव अर्हः'' इति ।

तत् श्रुत्वा माधवी तं भर्त्सयन्ती अवदत् - ''यः साहसी भवति तम् अहं परिणेष्यामि इति उक्तं मया, न तु देशोपकारकमात्रम् । सत्यवान् एव वस्तुतः साहसी अस्ति'' इति ।

तदा सत्यवान् विनयेन अवदत् -

''क्षन्तव्योऽहं राजकुमारि ! यथा भवत्या चिन्तितं तथा साहसं न कृतं मया'' इति ।

''आत्मना कीदृशं साहसं कृतम् इति भवान् न जानाति । मां परिणेतुम् अर्हः भवान् एव'' इति अवदत् राजकुमारी ।

वेतालः एवं कथां समाप्य अवदत् - ''अये राजन् ! जयद्रथः स्वस्य लक्ष्यस्य पूर्त्यै पूर्णप्रयासं कृतवान् । सिद्धयोगिनं दृष्ट्वा तायकं प्राप्य भीरुं सत्यवन्तं कार्ये नियोज्य महेन्द्रगिरिं राक्षसात् रक्षितवान् । किन्तु राजकुमारी तं धिक्कृत्य तदीयं परिणयं निराकृतवती । किं सा वचनपालनात् भ्रष्टा न जाता ? सत्यवतः विषये स्पष्टं यत् सः कश्चन महाभीरुः इति । सः यत् कृतवान् तत्र जयद्रथः एव कारणम् । एवं स्थिते अपि तं साहसी इति वदन्त्याः राजकुमार्याः कथनं किं युक्तम् ? तस्य परिणयम् अङ्गीकुर्वती राजकुमारी किं विवेकिनी ? मम एतेषां सन्देहानाम् उत्तरं जानन् अपि यदि भवान् न वदेत् तर्हि भवतः शिरः सहस्रधा भग्नं भवेत्'' इति ।

तदा त्रिविक्रमः अवदत् - ''वास्तविकं विषयं गोपयित्वा जयद्रथः अकृतस्यापि कार्यस्य फलं प्राप्तुम् इष्टवान् । एवं यः करोति सः एव वस्तुतः भीरुः । सत्यवति आत्मविश्वासः न आसीत् । तावता सः भीरुः तु न आसीत् । अतः एव सः साहसकार्याणि कर्तुं शक्तवान् । जयद्रथः तस्मिन् आत्मविश्वासं पूरितवान् । अग्रिमं कार्यं सर्वं तेन स्वयं कृतम् । तायकम् अपि आत्मविश्वासपूरणाय एव जातम् । भीरुः कश्चित् तायकं धृत्वापि किमपि साहसकार्यं कर्तुं न अर्हति । जयद्रथः उपायचतुरः । अतः सः सत्यवन्तं कार्ये योजितवान् । किन्तु प्रवृत्त्या सः साहसी न । सत्यवान् साहसी, किन्तु आत्मविश्वासहीनः । एतत्सर्वं जानती राजकुमारी जयद्रथं भीरुम् उक्त्वा सत्यवतः परिणये मतिं कृतवती । यथा घोषितं तथैव कृतं तया । तस्याः व्यवहारे न अविवेकिता'' इति ।

एवं वदता त्रिविक्रमेण मौनभङ्गः कृतः आसीत् । अतः शवान्तर्गतः वेतालः ततः अदृश्यः भूत्वा यथापूर्वं वृक्षस्य शाखाम् अवलम्बितवान् ।








## ग्रामोऽयं संस्कृतबहुलः

राजस्थानस्य बनसवाडाजनपदे गनोडाग्रामः अन्यग्रामः इव एव आसीत् दशभ्यः वर्षेभ्यः पूर्वम् । किन्तु इदानीं तत्र महत् परिवर्तनं जातं परिलक्ष्यते । तत्रत्यानां बहूनां द्वितीयभाषा अस्ति संस्कृतम् । तेषां मातृभाषा अस्ति वाग्डी । तस्मिन् ग्रामे तिस्रः शैक्षिकसंस्थाः सन्ति । एका प्राथमिकशाला, उच्चमाध्यमिकशाला, अन्यः संस्कृतमहाविद्यालयः चेति । उच्चमाध्यमिकशालायां संस्कृतम् अपि पाठ्यते अन्यतमविषयत्वेन । ग्रामस्थाः सहस्राधिकाः विद्यार्थिनः अध्यापकाः च सम्भूय योजनां कृतवन्तः संस्कृतस्य जनप्रियतासम्पादनाय । बहुषु गृहेषु संस्कृतभित्तिपत्राणि, ध्येयवाक्यपत्राणि, शुभाशयपत्राणि, शब्दसङ्ग्रहपत्राणि च सन्ति । ग्रामस्थाः बहवः गृहे विपण्यां मार्गे च संस्कृतेन संलपन्ति । श्लोकादिकथनादिकं ग्रामे दृश्यते सर्वत्र ।

## कामस्य आराधनम्



केरलराज्ये उत्तरमलबारप्रदेशे मार्च्-एप्रिल्मासयोः समर्च्यते कामदेवः । उत्सवोऽयं नव दिनानि यावत् प्रचलति । भगवत्याः मन्दिरेषु प्रचलति अयमुत्सवः । स्वस्य तपसः भङ्गः यदा जातः तदा क्रुद्धः शिवः स्वस्य तृतीयं नेत्रम् उन्मील्य कामं भस्मसात् कृतवान् आसीत् । तदा नितरां दुःखतप्ता रतीदेवी विलपन्ती स्वस्य पत्युः पुनरुज्जीवनं प्रार्थितवती दैन्येन । तदा शिवः तां बोधितवान् – 'पुष्पैः कामदेवस्य मूर्तिं रचयित्वा पूज्यते चेत् इष्टसिद्धिः भविष्यति' इति । रत्या कामदेवः पूजितः यत् तन्निमित्तं 'पूरम्' इत्येषः उत्सवः आचर्यते केरले ।

# अस्वीकृतं फलमिव ....

नूतनः कश्चन मठः सारनाथप्रदेशे संस्थापितः जातः । सारनाथः प्रसिद्धस्य तीर्थक्षेत्रस्य वाराणसीनगरस्य समीपे अस्ति । 'एतस्य नूतनस्य मठस्य संस्थापकः कपिलवस्तुराजस्य पुत्रः गौतमः एव । सः इदानीं 'बुद्ध'नाम्ना ख्यातः अस्ति' इति ज्ञात्वा सारनाथपरिसरस्थाः जनाः आश्चर्यचकिताः ।

बुद्धः तच्छिष्याः च आध्यात्मिकजीवनं यापयन्ति स्म । प्रातःकाले ध्यानादिकं समाप्य तेषु केचन विविधाः दिशः अनुसरन्ति स्म । कश्चित् पूर्वस्यां दिशि स्थितं ग्रामं प्रविशति । अपरः पश्चिमायां स्थितं ग्रामं गच्छति । ते सर्वे भिक्षुपदवाच्याः । यावत् गृहस्वामी पश्येत् तावत् ते भिक्षवः गृहस्य पुरतः तिष्ठन्ति स्म । तेषां हस्ते भिक्षापात्रं किञ्चन भवति स्म । तदेव सूचयति स्म – ते भिक्षारूपेण किमपि इच्छन्ति इति । यदि गृहस्वामी भिक्षादानं निराकरोति तर्हि भिक्षुः विना प्रतिवचनम् अग्रे गच्छति स्म ।

कदाचित् ग्रामीणाः दूरप्रदेशात् आगताः च जनाः मठं गच्छन्ति स्म, यश्च 'विहार'-शब्देन निर्दिश्यते स्म । तस्य विहारस्य प्रमुखः आसीत् बुद्धः । सः भक्तान् तत्त्वज्ञानं बोधयति स्म, तैः पृष्टानां प्रश्नानाम् उत्तरं ददाति स्म च । तत्र आगतान् सः परमया प्रीत्या मन्दहासपूर्वकं बोधयति स्म । अतः तेन बोध्यमानस्य






अर्थः सम्यक् न ज्ञायते चेदपि सान्निध्यमात्रेण तृप्ताः भवन्तः जनाः तस्य पुरतः घण्टाः यावत् उपविशन्ति स्म विना नीरसताम् ।

सारनाथतः अनतिदूरे कश्चन कुसीदवणिक् निवसति स्म । सः कदाचिदपि विहारं न आगतवान् आसीत्, न वा बुद्धं दृष्टवान् आसीत् वा । बुद्धस्य विषये महान् कोपः आसीत् तस्य । 'यदि सर्वे जनाः बुद्धस्य तत्त्वम् एव अङ्गीकुर्युः तर्हि ते भौतिककार्यविषये अनासक्ताः भवेयुः । धनसम्पादने अनासक्ताश्च भवेयुः । यदा धनं कःपदार्थः भवति तदा मम वृत्तेः का गतिः ? एतस्य सर्वस्य कारणं भवति सः बुद्धः एव' इति चिन्तयन् सः धनिकः बुद्धस्मरणात् एव क्रुद्धः भवति स्म ।

कश्चन प्रातःकालः । सः धनिकः स्नानाय नदीं प्रति गन्तुम् उद्युक्तः आसीत् । तावता द्वारस्य पुरतः स्थितः कश्चन भिक्षुः तेन दृष्टः । एतत् दृष्टवता तेन महान् क्रोधः प्राप्तः । निराकरणपूर्वकं हस्तचालनमात्रेण सः तं भिक्षुम् अन्यत्र प्रेषयितुम् अशक्ष्यत् । किन्तु सः तथा न कृतवान् । योग्यः पाठः पाठनीयः इति भावः तस्य मनसि आसीत् ।

''भोः भिक्षो ! आत्मना किं क्रियते इति किं भवान् जानाति ? समाजस्य भारभूतः भवान् । भिक्षान्नं खादन् सुखेन जीवनं यापयन् अलसः भवान् । परमालस्यं भवतः । धिक् भवन्तम् ...'' इत्येवं तं बहुधा तर्जितवान् सः । किन्तु भिक्षुणा प्रतिवचनं किमपि न उक्तम् । एतस्मात् तस्य धनिकस्य क्रोधः इतोऽपि प्रवृद्धः । सः स्वस्य ध्वनिम् उच्चैः कुर्वन् पुनरपि अतर्जयत् - ''अहं भवतः नायकं गौतमं सम्यक् जानामि । मूर्खः सः । अविवेकी सः । परमदुष्टः सः'' इति ।

एतत् श्रुत्वा अपि भिक्षुः तु स्मितवदनः मौनेन स्थितवान् आसीत् । तस्मात् धनिकस्य क्रोधः पराकाष्ठां गतः । आत्मना ये ये ज्ञायन्ते

तान् सर्वान् अपशब्दान् उपयुज्य तर्जितवान् सः । परमोच्चस्वरेण तर्जितवान्, मुखं रक्तीकृत्य तर्जितवान् । घण्टां यावत् एषः तर्जनकार्यक्रमः निरन्तरं प्रवृत्तः ।

धनिकस्य तर्जनसामर्थ्यं समाप्तम् । नितरां श्रान्तः सः निरन्तरं तर्जयन् भिक्षोः समीपम् आगतवान् आसीत् । एतावतः तर्जनस्य अनन्तरम् अपि भिक्षोः मुखे आसीत् स एव मन्दहासः ।

'मया एतावत् तर्जितं चेदपि एतस्य मुखे क्रोधस्य एका रेखा अपि न दृष्टा खलु ? मौनेन तिष्ठन् मन्दहासं प्रकटयति खलु एषः' इति अचिन्तयत् सः ।

स्वस्य क्रोधं किञ्चित् निगृह्य सः अपृच्छत् - ''भोः, किमर्थं भवता प्रतिवचनं किमपि न उक्तम् ? मया एतावत् तर्जनं क्रियते चेदपि भवता किमर्थं मौनेन स्थीयते ?'' इति ।

तदा सः भिक्षुः मन्दहासं प्रकटयन् एव स्वस्य स्यूततः एकं फलं निष्कास्य धनिकाय प्रदर्शयन् - ''मित्र ! यदि अहम् एतत् फलं भवते दद्यां, भवान् च तस्य स्वीकरणं यदि निराकुर्यात्, तर्हि तस्य फलस्य का गतिः ?'' इति अपृच्छत् ।

''कीदृशः प्रश्नः एषः ! कान्या गतिः फलस्य ? तत् तु भवदीयम् एव भविष्यति । एतत् तु पामरः अपि जानाति'' इति अवदत् धनिकः ।

''एवम् ! एतावत्पर्यन्तं भवता तर्जनं कृतं खलु, तस्य एकम् अपि वचनं मया न स्वीकृतम् । भवतः शब्दाः कुत्र स्युः इति चिन्तयतु भवान् एव'' इति अवदत् सः भिक्षुः ।

एतत् श्रुत्वा सः धनिकः आघातं प्राप्तवान् इव । मया प्रयुक्ताः अपशब्दाः मयि एव सन्ति इति अवगतं तेन । 'मया प्रयुक्ताः शब्दाः एतं भिक्षुं न अस्पृशन् एव इत्यतः एषः भिक्षुः शान्ततया स्मयमानः अस्ति' इति अचिन्तयत् सः ।

एतावता जनाः अवगतवन्तः यत् आगतः अयं भिक्षुः न अन्यः, अपि तु भगवान् बुद्धः एव इति । अतः ते तं नमस्कृतवन्तः भक्त्या । एतत् दृष्ट्वा सः धनिकः अपि द्वित्राणि पदानि अग्रे गत्वा तं विनयेन नमस्कृतवान् शरणागतिं प्रार्थयमानः ।





# व्यर्थतां गताः वराः

हेरम्बपुरे सीतारामः नाम कश्चन दरिद्रः निवसति स्म । सः प्रतिदिनम् अरण्यं गत्वा काष्ठानि सङ्गृह्य विक्रीय परिवार-पोषणाय वस्तूनि क्रीणाति स्म । तदीयः परिवारः विशालः । धनसम्पादकः सः एकः एव । अतः तेन सदा महत् कष्टम् अनुभूयते स्म ।

कदाचित् सः चिन्तयति स्म – 'यदि काचित् देवता प्रत्यक्षीभूय मम कुटुम्बनौकायाः चालने साहाय्यं कुर्यात् तर्हि अहो, कियत् सुखम् अभविष्यत् !' इति ।

कदाचित् सः यथापूर्वं काष्ठसङ्ग्रहणाय अरण्यं गतः । सः एकं महान्तं वृक्षम् अन्विष्य तस्य छेदनाय परशुम् उन्नीतवान् । परशुः अग्रे न गतः । 'केनचित् परशुः गृहीतः अस्ति इति भाति' इति चिन्तयन् सः मुखं परिवर्त्य दृष्टवान् । तत्र परशुं गृहीत्वा स्थिता वृक्षदेवी तेन दृष्टा ।

वृक्षदेवी तम् अवदत् – "अहं वृक्षदेवी अस्मि । एतस्य छेदनाय प्रयासः मास्तु । बहुभ्यः वर्षेभ्यः अहमत्र निवसामि । भवतः दारिद्र्यक्लेशः महान् इति अहं जानामि । अतः भवते त्रीन् वरान् ददामि । यत् इष्यते तत् प्राप्नोतु भवान्" इति ।

"अम्ब ! अनुगृहीतोऽस्मि । यस्मिन् वृक्षे भवत्याः वासः तम् अहं न छिनद्मि । प्रतिदिनम् एकैकं वरं याचामि । भवती निश्चयेन अनुग्रहं करिष्यति एव खलु ?" इति अपृच्छत् सीतारामः ।

"अवश्यं करिष्यामि" इति उक्त्वा वृक्षदेवी अदृश्यतां गता ।

सीतारामः महता सन्तोषेण गृहं प्रत्यागतः । सायङ्काले सः मनसि अचिन्तयत् – 'मम परिवारसदस्यानां कृते स्वादुभोजनं प्राप्येत, मधुरखाद्यादिसहितम्' इति ।

तस्य चिन्तनम् आसीत् यत् यदा नेत्रे

उन्मील्येत तदा भोजनम् उपस्थितं भवति इति । किन्तु तथा न जातम् । 'वरस्य सफलतार्थम् अल्पः कालः आवश्यकः स्यात् अपि' इति चिन्तयन् सः स्वादुभोजनं प्रतीक्षमाणः उपविष्टवान् ।

अत्रान्तरे कोऽपि शब्दं कृतवान् । सीतारामः गत्वा द्वारम् उद्घाटितवान् । द्वारे प्रतिवेशी सोमशेखरः उपस्थितः आसीत् । तस्य शिरसि कश्चन कण्डोलः आसीत् । कण्डोलात् सुगन्धः निर्गच्छति स्म ।

"अद्य अस्माकं गृहे सत्यनारायणपूजा प्रवृत्ता । मम पत्नी भवद्भ्यः खाद्यसहितं भोजनं प्रेषितवती अस्ति" इति अवदत् सोमशेखरः ।

सीतारामः तस्य स्वीकारं निराकुर्वन् - "अचिरात् एव अत्र विविधानि भक्ष्य-भोज्यादीनि आगमिष्यन्ति । तदा भवता आनीतस्य उपयोक्तारः न भवेयुः । भोजन-पदार्थानां व्यर्थता किमर्थं करणीया ? एतानि प्रतिनयतु भवान्" इति उक्त्वा द्वारस्य पिधानं कृतवान् ।

सायङ्कालः अतीतः चेदपि सीतारामेण स्वादुभोजनं किं, सामान्यभोजनम् अपि न प्राप्तम् । नितरां खिन्नः सः पत्न्या दत्तं यत्किञ्चित् खादित्वा स्वस्य बुभुक्षां निवारितवान् ।

वृक्षदेव्याः वरः असफलः जातः यत् तस्मात् सीतारामः नितरां खिन्नः । अनन्तरदिने प्रातः सः नेत्रे निमील्य मनसि अवदत् - 'मम गृहं सम्पन्नं भवतु, तत्र सर्वाणि आनुकूल्यानि भवन्तु' इति ।



अर्धघण्टायाः अनन्तरं तेन नेत्रे उन्मीलिते । तदा अपि कुटीरं यथापूर्वम् आसीत् । एतस्मात् सीतारामः नितरां खिन्नः ।

अत्रान्तरे द्वारशब्दः श्रुतः । सीतारामः उत्थाय गत्वा द्वारम् उद्घाटितवान् । द्वारस्य पुरतः कश्चन अपरिचितः जनः स्थितः आसीत् ।

सः सीतारामम् अवदत् - "महाशय ! अहं सुगन्धपुरीतः आगतः अस्मि । भवतः मातुलः अन्तिमान् क्षणान् गणयन् अस्ति । भवन्तम् आनेतुं सः मां प्रेषितवान् अस्ति" इति ।

सीतारामः निश्चितवान् यत् यावत् वृक्षदेव्याः वरः सफलः न भविष्यति तावत् अहं कुटीरात् अन्यत्र न गमिष्यामि इति । अतः सः आगन्तुकम् अवदत् - "क्षन्तव्यः अहम् ।



कस्मिंश्चित् महत्त्वपूर्णे कार्ये अहं व्यापृतः अस्मि । अतः अहं तत्र आगन्तुं न शक्नोमि । एतं विषयं मातुलं वदतु'' इति ।

रात्रिः अतीता चेदपि सीतारामस्य कुटीरं महाभवनत्वेन परिवर्तितं न जातम् । एवं वृक्षदेव्याः द्वितीयः वरः अपि सफलः न जातः । तृतीये दिने बहु विचिन्त्य सीतारामः वृक्षदेवीं प्रार्थितवान् - 'मह्यं लक्षं सुवर्ण-नाणकानि आवश्यकानि' इति ।

तेन सुवर्णनाणकानि न दृष्टानि, प्रत्युत दण्डधारिणौ द्वौ दृढकायौ दृष्टौ ।

तौ सीतारामम् अवदताम् - ''भूस्वामी वीरभूपतिः आवां प्रेषितवान् अस्ति । भवान् अविलम्बेन आनेतव्यः इति तस्य आज्ञा अस्ति'' इति ।

एतत् श्रुत्वा सीतारामः नितरां दिग्भ्रान्तः । पूर्वं कदाचित् भूस्वामिनः क्षेत्रे स्थितं वृक्षं सीतारामः कर्तयन् आसीत् । तत् दृष्टवान् आसीत् भूस्वामी । भूस्वामिनः सेवकाः यदा ग्रहीतुम् आगताः तदा सीतारामः पलायितवान् आसीत् । एतत्सर्वं स्मरन् सीतारामः अचिन्तयत् यत् मां दण्डयितुम् एव भूस्वामी भटौ प्रेषितवान् अस्ति इति ।

अतः सः कम्पमानस्वरेण अवदत् - ''मया सुगन्धपुरीं प्रति त्वरया गन्तव्यम् । ततः प्रत्यागत्य भूस्वामिनः दर्शनं करिष्यामि'' इति ।

रात्रिः अतीता । सीतारामेण प्रार्थिता तृतीया अपेक्षा अपि न पूर्णा । तस्मात् कुपितः सीतारामः चतुर्थे दिने परशुम् उन्नीय वृक्षदेव्याः वृक्षस्य छेदनार्थम् अरण्यं गतः ।

यदा वृक्षस्य छेदनाय सः उद्युक्तः तदा वृक्षदेवी प्रत्यक्षीभूय अपृच्छत् - ''सीताराम ! किम् एतत् ? हस्ते परशुः किमर्थम् ? मया त्रयः वराः दत्ताः खलु ?'' इति ।

''व्यर्थाः ते । मया एकस्यापि फलं न प्राप्तम् एव'' इति वदन् सीतारामः प्रवृत्तं सर्वं निवेदितवान् ।

तदा वृक्षदेवी अवदत् - ''मम वरस्य फलं न प्राप्तम् इति भवतः कथनम् अयुक्तम् । मया भूरिभोजनं प्रेषितम् आसीत् । निस्सन्तानः सुगन्धपुर्याः भवतः मातुलः स्वस्य समग्रां सम्पत्तिं भवते दातुम् इष्टवान् आसीत् । सः स्वस्य भवनम् अपि भवते दातुम् इष्टवान् आसीत् । तेन यदा वार्ता प्रेषिता तदा भवता गमनस्य निराकृतिः दर्शिता । किम् एतत्

युक्तम् ?'' इति ।

सीतारामः उत्तरं किमपि न दत्तवान् । स्वस्य अज्ञानस्य कारणतः गृहस्य द्वारे उपस्थितम् अपि भाग्यं हस्तगतं न जातम् आसीत् तस्य ।

'मम पादयोः उपरि मया एव परशुः पातितः । मूर्खोऽस्मि अहम्' इति चिन्तयन् स्वस्य दौर्भाग्यं निन्दन् सः दीनस्वरेण वृक्ष-देवीम् अपृच्छत् - ''मया लक्षं सुवर्ण-नाणकानि प्रार्थितानि । तानि किमर्थं न दत्तानि भवत्या ?'' इति ।

वृक्षदेवी मन्दहासपूर्वकम् अवदत् - ''अत्र अपि भवतः व्यवहारः एव कारणम् । अत्याशा भवतः । अविवेकः अपि । सुवर्ण-नाणकानि दातुम् एव भूस्वामी भवन्तम् आहूतवान् आसीत् । भवता तस्य क्षेत्रे यः वृक्षः कर्तितः तस्य मूले तेन कश्चन ताम्र-कलशः प्राप्तः । तत्र दशलक्षं सुवर्णनाणकानि आसन् । भवत्कारणतः स च कलशः प्राप्तः इत्यतः भूस्वामी चिन्तितवान् यत् भवते लक्षं सुवर्णनाणकानि दातव्यानि इति । किन्तु भवान् तं द्रष्टुं न गतः । भवन्तं गर्वितं भावयन् सः तानि नाणकानि निर्धनेभ्यः वितीर्णवान्'' इति ।

वृक्षदेव्याः वचनं श्रुत्वा सीतारामः शिला-वत् स्तब्धः जातः ।

सः दैन्येन तां पुनः अवदत् - ''अयि, भगवति ! पुनरपि त्रयः वराः दातव्याः कृपया'' इति ।

तदा वृक्षदेवी निराकरणपूर्वकं शिरः चालयन्ती - ''अहम् एकवारम् एव वरं दातुं शक्नोमि । तावत् एव सामर्थ्यं मम । अज्ञानेन अविवेकेन, लोभेन च भवान् प्राप्तम् अपि वरं भूमौ पातितवान् । मानवेन जीवने एकवारम् एव भाग्यलाभाय अवकाशः प्राप्यते । भवता तु त्रिवारम् अवकाशः प्राप्तः आसीत् । इतः परं भवता स्वशक्त्या एव जीवनं करणीयम् । अग्रे शुष्कानि काष्ठानि एव सङ्ग्रहणीयानि, न तु अशुष्काणि । वृक्षलतादयः न पीडनीयाः । यावत् भवान् वृक्षादिषु करुणावान् भवति तावत् भवतः समग्रस्य परिवारस्य बुभुक्षायाः निवारणाय अहं साहाय्यं करिष्यामि । एषः मम आशीर्वादः'' इति उक्त्वा ततः अदृश्या जाता ।



# सिक्किम्राज्यीया जानपदकथा

भारतस्य ईशान्यकोणे स्थितं पर्वतीयं राज्यम् अस्ति सिक्किम् । वस्तुतः एतत् राज्यं हिमालयस्य उपत्यकायाम् अस्ति । जगति औन्नत्येन तृतीयं स्थानं वहत् काञ्चनगङ्गाशिखरम् (८,५९८ पादोन्नतम्) एतस्मिन् राज्ये अस्ति ।

एतस्मिन् राज्ये समुद्रतलात् ३०० मीटरुन्नतं स्थलं यथा, तथैव ८,५८५ मीटरुन्नतं स्थलम् अपि अस्ति । एवम् औन्नत्यवैविध्यम् अत्र अधिकम् । अत्यल्पः एव भूभागः अत्र वासयोग्यः अस्ति ।

एतस्य राज्यस्य विस्तारः ७०९६ चतुरस्रकिलोमीटरात्मकः । अत्रत्या जनसंख्या ५४०,४९३ । एतस्य उत्तरभागे टिबेट् अस्ति, पूर्वभागे भूतान् अस्ति, पश्चिमे नेपाल् अस्ति, दक्षिणे च पश्चिमवङ्गराज्यम् अस्ति ।

काञ्चनगङ्गा अत्र उच्यते – 'खांग्चेङ्झोंगा' इति । जनाः तत् शिखरं दैवीयभावेन पश्यन्ति । स्वभूमेः रक्षकदैवत्वेन भावयन्ति ते तत् शिखरम् ।

'तीस्ता' अत्रत्या प्रमुखा नदी । १९७५ तमे वर्षे एप्रिल्मासस्य २६तमे दिनाङ्के एतत् राज्यत्वम् अवाप्नोत् । एतस्य राजधानी अस्ति – 'गाङ्गटक्' । स्वातन्त्र्यप्राप्तितः पूर्वं 'चोग्याल'वंशीयाः एतं प्रदेशं पालयन्ति स्म । इंग्लीष् अत्र शासकीयभाषा । नेपाली, हिन्दी सिक्किमी, लेप्चा इत्यादयः भाषाः अपि अत्र दृश्यन्ते ।

## सुन्दर्यौ तरुण्यौ डाकिनी च

कस्यचित् पर्वतस्य मूलभागे आसीत् कश्चन सुन्दरः खातप्रदेशः । तत्र आसीत् परमसुन्दरम् उद्यानम् । तत्र किञ्चन कुटीरम् आसीत् । तस्मिन् कोम्तारहपा, जार्खरहपा चेति उभे सुन्दर्यौ भगिन्यौ निवसतः स्म । कोम्तारहपायाः कण्ठः सुमधुरः । यदा सा गायति तदा पुष्पाणि विकसन्ति स्म । अनुजा जार्खरहपा नृत्यनिपुणा । यदा सा नृत्यस्य आरम्भं करोति तदा व्याघ्र-सिंह-भल्लूकादयः क्रूरजन्तवः अपि नर्तनं कुर्वन्ति स्म ।

ते यत्र वसतः तत् उद्यानं भगवतः सुमुदेवस्य । एते भगिन्यौ तत् उद्यानं श्रद्धया



पालयतः । तस्मिन् उद्याने अपूर्वाणि कानिचन पुष्पाणि अपि आसन् । तानि दुष्टशक्तिभ्यः, तत्रापि लैङ्गबारीयायाः तैङ्गपाडाकिनीतः उद्यानं रक्षन्ति स्म । तैङ्गपा यस्य उपरि आक्रमणं करोति तस्य स्वप्ने आदौ दृष्टिगोचरातां याति स्म । अपेक्षितं रूपं धर्तुं सामर्थ्यम् आसीत् तस्याः । न कापि शक्तिः ताम् अवरोद्धुम् अर्हति स्म ।

एकस्मिन् दिने जार्खरहपा एकं विलक्षणं स्वप्नं दृष्टवती । तैङ्गपया स्वस्य भगिन्याः सुवर्णोपधानं गीर्यमाणं दृष्टं तया । अतः सा रोदनपूर्वकम् उत्थितवती । एतत् रोदनं श्रुत्वा कोम्तारहपा अपि उत्थितवती । उभे अपि नितरां खिन्ने । तैङ्गपायाः आक्रमणस्य कालः सन्निहितः इति ताभ्याम् अवगतम् ।

यदा ते एतस्मात् आत्मनः रक्षणाय उपायं चिन्तयन्त्यौ आस्तां तदा उद्याने विहरन्ती काचित् तरुणी ताभ्यां दृष्टा ।

''का स्यात् सा ? तैङ्गपायाः छद्मव्यवहारः स्यात् एषः'' इति भीतिपुरस्सरम् उक्तवती कोम्तारहपा ।

अनुजा जार्खरहपा स्वस्य सुवर्णोपधानं सुदृढं गृहीत्वा उक्तवती – ''एषा तैङ्गपा एव इत्यत्र नास्ति सन्देहः । सा इतः एव आगच्छन्ती अस्ति, पश्यतु'' इति ।

तैङ्गपा साक्षात् तयोः समीपम् आगतवती । तयोः पार्श्वे उपविश्य सा उक्तवती – ''भवत्यौ यादृशसुन्दर्यौ स्तः तादृश्यः मया इतः पूर्वं न दृष्टाः एव । लैङ्गबारस्य राजा पुनुवर्यः यदि भवत्यौ पश्येत् तर्हि निश्चयेन भवत्योः अनुरक्तः स्यात्, भवत्यौ परिणयेत् च । अहं



भवत्यौ तत्समीपं नेतुम् आगता अस्मि । शीघ्रं सज्जे भवताम् । सायङ्कालात् पूर्वम् अस्माभिः तत्र स्थातव्यम्'' इति ।

''आवाम् अत्र सुखेन स्वः । आवां महाराज्ञीत्वं प्राप्तुं न इच्छावः । तत् पदं प्राप्तुम् आवयोः तादृशी योग्यता नास्ति अपि । अतः कृपया अत्रैव स्थातुम् अनुमतिं ददातु'' इति उक्तवत्यौ ते भगिन्यौ ।

एतत् श्रुतवत्या तैङ्गपया कोपः प्राप्तः । 'मम योजना असफला जायमाना अस्ति' इति चिन्तयन्ती सा तर्जनस्वरेण उक्तवती – ''एषा पुनुवर्यस्य आज्ञा । एतां तिरस्कर्तुं न अर्हतः भवत्यौ । मया सह लैङ्गबारं प्रति आगन्तव्यम् एव भवतीभ्याम्'' इति अवदत् तैङ्गपा ।

एतत् श्रुतवत्योः तयोः भगिन्योः भीतिः प्रवृद्धा । एषा तरुणी वञ्चिका एव इति ते निश्चितवत्यौ । तां तोषयितुम् इच्छन्ती कोम्तारहपा अवदत् – ''आर्ये, अलं कोपेन ।



भवत्याः बुभुक्षा स्यात् । अतः किञ्चित् किमपि खादतु'' इति ।

ततः सा तस्यै तरुण्यै शूर्पमितम् अन्नम् एकस्य अजस्य मांसं च दत्तवती । तरुणी तत् क्षणाभ्यन्तरे खादित्वा इतोऽपि आवश्यकम् इति उक्तवती । पाकशालायां यावत् अस्ति तत्सर्वं तस्यै दत्तम् । सा तदपि क्षणाभ्यन्तरे गीर्णवती । एतत् दृष्ट्वा ते भगिन्यौ अवगतवत्यौ यत् एषा तरुणी तैङ्गपा एव इति ।

आहारसेवनानन्तरं तैङ्गपा भगिन्यौ सानुरोधं पुनः उक्तवती यत् भवतीभ्यां मया सह आगन्तव्यम् इति । तदा व्याजं प्रदर्शयन्ती कोम्तारहपा उक्तवती – ''मया कानिचन कार्याणि अवश्यं करणीयानि सन्ति । क्षेत्र-कर्षणं कृत्वा बीजावापः करणीयः'' इति ।

''तद्विषये चिन्ता करणीया नास्ति । तत् कार्यम् अहं क्षणाभ्यन्तरे करिष्यामि'' इति अवदत् तैङ्गपा । ततः सा कमपि मन्त्रम् उच्चारितवती, हस्तम् इतस्ततः चालितवती च । तस्मात् क्षेत्रं समग्रं कृष्टम् अभवत् । बीजानि अपि उप्तानि । ततः सा भगिन्यौ उक्तवती – ''इदानीं प्रस्थानं भवतु'' इति ।

तदा जार्खरहपा उक्तवती – ''मया धान्यानि स्वच्छीकरणीयानि, वस्त्रवयनं च करणीयम् । तदुभयस्य समाप्तेः अनन्तरम् एव भवत्या सह प्रस्थानं चिन्तयितुं शक्यम्'' इति ।

तैङ्गपा मन्त्रविद्यासाहाय्येन तदुभयम् अपि कार्यं क्षणाभ्यन्तरे निर्वर्तितवती । अतः अनन्यगतिकतया ताभ्यां सहोदराभ्यां तैङ्गपया सह प्रस्थातव्यम् एव अभवत् ।

किञ्चिद्दूरं गमनानन्तरं ताभिः काचित् नदी प्राप्ता । ततः राजप्रासादः दृश्यते स्म । प्रासादं दृष्ट्वा जार्खरहपा उक्तवती – ''प्रासादः आसन्नः दृश्यते । इतः परं कोऽपि अपायः न भवेत् अस्माकम्'' इति ।

तैङ्गपा प्रासादात् अनतिदूरे गमनं स्थगित-वती । नद्यां स्थित्वा सा अवदत् – ''पुनुवर्यस्य मेलनात् पूर्वं मुखादिकं प्रक्षाल्य सज्जे भवताम्'' इति । यदा मुखक्षालनाय कोम्तार-हपा जले हस्तं स्थापितवती तदा तैङ्गपा तां मीनरूपेण परिवर्तितवती, नद्यां क्षिप्तवती च ।

जार्खरहपा एतत् दृष्ट्वा नितरां भीता । सा ततः धावितुम् उद्युक्ता । किन्तु तावता तैङ्गपा तां सुदृढं गृहीत्वा उक्तवती – ''भोः, अलं भीत्या । मया यथा उच्यते तथा आचरितं चेत् न कोऽपि अपायः भवत्याः'' इति ।

ततः सा मन्त्रम् उच्चार्य कोम्तारहपायाः रूपं धृतवती । ''अहं भवत्याः भगिनी इव

एव दृश्ये खलु ?'' इति पृष्टवती सा । जार्खरहपा नितराम् आश्चर्यचकिता । यतः तैङ्नपा इदानीं कोम्तारहपा इव एव दृश्यते स्म !

ततः ते पुनुवर्यस्य प्रासादं गतवत्यौ । तत्र तैङ्नपा आत्मानं कोम्तारहपात्वेन परिचाय्य जार्खरहपां स्वस्य सेविकाम् उक्तवती । पुनुवर्यः तस्याः सौन्दर्यं दृष्ट्वा नितरां सन्तुष्टः सन् अचिरात् एव तां परिणीतवान् ।

तस्मात् दिनात् तैङ्नपा अन्तःपुरे वसन्ती सर्वाणि भोगसुखानि अनुभूतवती । जार्खरहपया तु आप्रातः आसायं सर्वविधानि सेवाकार्याणि करणीयानि भवन्ति स्म ।

प्रतिदिनं जार्खरहपया अपराह्णे पुनुवर्यस्य अजाः चारणाय शाद्वलं प्रति नेतव्याः भवन्ति स्म । सायङ्काले अजानां गणनाव्याजेन गोष्ठं गता तैङ्नपा स्वस्य महोदरस्य पूरणाय द्वित्रान् अजान् खादति स्म ।

एकदा अजान् चारयितुं नदीनीरं गता जार्खरहपा स्वभगिनीं बहुधा स्मृतवती । भगिनीं पुरतः स्थितां मन्यमाना सा ताम् उद्दिश्य स्वस्य दैनन्दिनकष्टानि निवेद्य अश्रूणि स्रावितवती ।

अचिरात् एव तया नदीमध्यतः सान्त्वनवचनानि श्रुतानि इव । कश्चन मीनः तानि वचनानि वदति स्म । जार्खरहपा अवगतवती यत् एषा मम भगिनी एव इति । अनन्तरक्षणे कोम्तारहपा स्वस्य वास्तविकरूपेण तत्र प्रत्यक्षा जाता । ते परस्परं स्वकष्टसुखादिकं निवेदितवत्यौ । कोम्तारहपा तैङ्नपायाः शापस्य कारणतः नद्यां मीनरूपेण वसन्ती दिने एकवारं घण्टां यावत् मानवरूपेण स्थातुम् अर्हति स्म ।

भगिनी जीवति इति ज्ञात्वा जार्खरहपा नितरां सन्तुष्टा । तस्मात् दिनात् प्रतिदिनं तयोः मेलनम् आरब्धम् । एतस्मात् जार्खरहपायाः व्यवहारे महत् परिवर्तनं जातम् । सा सर्वदा उत्साहेन कार्यरता भवति स्म ।

जार्खरहपायां जातम् एतत् परिवर्तनं तैङ्नपया अपि लक्षितम् । 'एषा एषु दिनेषु सदा सन्तोषेण तिष्ठति । प्रायः एषा भगिन्या मिलितवती स्यात् । अतः एव सा सन्तोषेण तिष्ठति । श्वः अहम् एतत् प्रत्यक्षं ज्ञास्यामि' इति अचिन्तयत् सा ।

अनन्तरदिने सा अजाचारणाय जार्खरहपायाः गमनं स्थगयित्वा स्वयमेव तत्कार्यार्थं

# बौद्धविहाराः

सिक्किंराज्ये बौद्धविहाराः सन्ति बहवः । प्रायः द्विशताधिकाः (२००) स्युः ते तत्र । एते तेषां जीवनस्य अविभाज्याङ्गत्वेन सन्ति । एतेषां प्रभावः अपि अत्यधिकः तत्रत्यानां सांस्कृतिकजीवने । एते बौद्धविहाराः अत्रत्यैः 'गोम्पास्' इति उच्यन्ते । नैङ्मापाजातीयानाम् (कग्यूपा इति अपरं नाम) एतैः सह सम्बन्धः आधिक्येन । ऐक्यसम्पादने एते उपकुर्वन्ति तत्र ।



गतवती ।

तत्र कोम्तारहपा तया दृष्टा । यावत् सा तां ग्रहीतुं गता तावता कथमपि ततः पलाय्य मीनरूपं धृत्वा जले निमग्ना अभवत् कोम्तारहपा । क्रोधेन तपन्ती ततः प्रतिगतवती तैङ्गपा ।

जार्खरहपा भगिन्याः सुरक्षितताविषये नितरां चिन्ताक्रान्ता आसीत् । सा एकत्र उपविश्य मौनेन अश्रूणि स्रावितवती । तावता पुनुवर्यः राज्ञ्या मेलितुं तत्र आगतः । तत्र सः रुदतीं जार्खरहपाम् अपश्यत् । इतः पूर्वम् अपि सः तस्याः मुखे स्थितां कान्तिहीनतां लक्षितवान् आसीत् । 'एतां काचित् समस्या बाधते' इति चिन्तितवान् सः ताम् अनुरोधपूर्वकम् अवदत् यत् दुःखस्य कारणम् उच्यताम् इति ।

जार्खरहपा प्रवृत्तं सर्वं निवेदितवती । तदा पुनुवर्यः आश्चर्येण अवदत् – ''किं भवती सत्यम् एव वदति ? सर्वथा विश्वासार्हं न एतत्'' इति ।

''यदि मम वचनस्य यथार्थता भवता परीक्षणीया तर्हि भवान् अद्य अजागोष्ठे निलीय स्थित्वा सर्वं परिशीलयतु । तदा तया क्रियमाणम् अजाभक्षणं तत्रभवता प्रत्यक्षं दृश्यते । तया एवं क्रियते इत्यतः एव अजानां सङ्ख्या प्रतिदिनं क्षीयमाणा अस्ति'' इति अवदत् जार्खरहपा ।

सायङ्काले पुनुवर्यः गोष्ठे निलीय स्थितवान् । यदा राज्ञी तत्र आगता तदा नितराम् आश्चर्यचकितः अभवत् सः । तैङ्गपा स्वस्य वास्तविकं रूपं प्राप्य त्रीन् अजान् खादितवती । राजा विना शब्दं प्रासादं प्रत्यागतवान् ।

अनन्तरदिने राजा प्रासादसमीपे एव नूतनस्य भवनस्य निर्माणम् आज्ञापितवान् । तच्च भवनं सम्यक् अलङ्कृतम् । तत्र शय्यायाः अधः गर्तः कारितः । स च गर्तः तीक्ष्णैः आयुधैः पूरितः च ।

ततः राजा राज्ञीम् अवदत् – ''मया भवत्याः निमित्तं नूतनं भवनं निर्मितम् अस्ति । कृपया आगत्य तत् परिशीलयतु'' इति । एतत् श्रुत्वा राज्ञीरूपेण स्थिता तैङ्गपा नितरां सन्तुष्टा ।

सा तत् भवनं गत्वा शयनमञ्चे उपविष्टवती । तदा स च मञ्चः भग्नः । सा गर्ते पतितवती । तीक्ष्णानाम् आयुधानाम् आघातात् तस्याः शरीरं खण्डशः छिन्नम् ।

ततः पुनुवर्यः जार्खरहपा च नदीतीरं गतवन्तौ । तत्र तौ प्रतीक्षमाणा स्थितवती आसीत् कोम्तारहपा । तैङ्गपायाः मरणात् सा शापात् मुक्ता जाता आसीत् । ततः पुनुवर्यः वास्तविकीं कोम्ताहरपां परिणीतवान् । ते भगिन्यौ प्रासादे सुखेन जीवितवत्यौ ।



# वार्ताविशेषः

## पुलिट्सर्प्रशस्तिः भारतीयायै

गीता आनन्द पूर्वं भारतस्य राष्ट्रियतरणपटुः आसीत् । मुम्बयीनगरे केथेड्रल्विद्यालये पठनावसरे सा बालिकानां नायिका आसीत् । तदवसरे सा विद्यालयपत्रिकायै स्थानीयघटनाः आधृत्य लेखान् लिखितवती आसीत् । एतस्याः लेखनप्रवृत्तेः कारणतः सा न्यूयार्कनगरीयायां 'दि वाल् स्ट्रीट् जर्नल्'नामिकायां पत्रिकायाम् अपि लेखान् लिखितवती । ते च लेखाः सद्यःकाले अमेरिकादेशे प्रवृत्तान् अर्थिकापराधान् अधिकृत्य आसन् । एतेषां कारणतः पत्रकारक्षेत्रीयां पुलिट्सर्प्रशस्तिं प्राप्तवती सा गते एप्रिल्मासे । विंशतिवर्षेभ्यः पूर्वं यस्मिन् केथेड्रल्विद्यालये सा पठितवती आसीत् तस्यैव विद्यालयस्य प्राचार्यायाः हस्तात् सा एतां प्रशस्तिम् अधिगृहीतवती ।

## प्रथमा कृतिः एव अभूत् अधिकधनहेतुः

शैला क्रिग्ली इतः परं जीविकानिर्वहणाय सर्वकारीयं साहाय्यं न अपेक्षते । यतः सा स्वस्य प्रथमकृतेः कारणतः कोट्यधीशा जाता अस्ति । त्रिंशद्वर्षेभ्यः पूर्वं यदा तस्याः पतिः दिवङ्गता तदा सा सर्वथा निर्गतिका जाता आसीत् । तदा सर्वकारेण तस्याः वासाय 'सुन्दरल्याण्ड्'प्रदेशे गृहमेकं प्रदत्तम् । त्रिभ्यः वर्षेभ्यः पूर्वं तत् गृहं नाशितम् । अतः वासाय तया इतस्ततः अटितं बहुधा । ततः तया कश्चन कथाग्रन्थः लिखितः 'रन् फार् होम्'नामकः । प्रकाशकाः प्रायः प्रथमकृतेः प्रकाशनाय अधिकं धनं न यच्छन्ति । एतस्याः कृतिं दृष्ट्वा प्रसिद्धा प्रकाशनसंस्था अवदत् यत् २,५०,००० डालराणि दास्यन्ते इति । राण्डम् हौस्नामिका अन्या प्रकाशनसंस्था एतस्मात् द्विगुणितं धनं दत्त्वा प्रकाशनाधिकारं प्राप्नोत् । सा प्रकाशनसंस्था अभिप्रैति यत् शैला अत्युत्तमा कृतिकारिणी इति ।





# गुरुदक्षिणा

पूर्वं 'समरसपरम्परा' नाम काचित् परम्परा आसीत् । तत्परम्परीयाः व्यायामशालां चालयन्ति स्म । मल्लयुद्ध-खड्गयुद्धादिकं बोधयन्ति स्म । द्रोणः अपि एतस्यां परम्परायां जातः ।

सः गोपालपुरे गुरुकुलं चालयन् मल्लयुद्धादिकं बोधयति स्म । मल्लयुद्धादिभिः सह सः नीतिशास्त्रम् अपि शिष्यान् बोधयति स्म । शिक्षणस्य समाप्तेः अनन्तरं शिष्याः तस्मै यथाशक्ति गुरुदक्षिणां दत्त्वा गृहं प्रतिगच्छन्ति स्म ।

विजयवर्मा त्रिपुर्याः भूस्वामिनः पुत्रः । सः द्रोणात् शिक्षणं प्राप्नुवन् आसीत् । मल्लयुद्धे दक्षः सः । गदाचालने अपि तत्सदृशः अन्यः न आसीत् ।

परशुरामः विजयवर्मणः सहपाठी । कदाचित् तयोः मल्लयुद्धं प्रवृत्तम् । तत्र विजयवर्मा पराजितः ।

परशुरामः सामान्ये कस्मिंश्चित् परिजनपरिवारे जातः । सामान्यकुले जातः कश्चित् मां पराजितवान् खलु इति विजयवर्मा नितरां खिन्नः ।

एतत् अवगतवान् द्रोणः तम् अवदत् - ''विजय ! प्रतिभाविषये धनिक-निर्धनभेदः न भवेत् । सर्वे समानाः तत्र । परशुरामः श्रद्धया परिश्रमेण च विद्याम् अभ्यस्य परिणतः जातः । तद्विषये असन्तोषः असूया वा न भवेत्'' इति ।

यदा विद्याभ्यासः समाप्तः तदा विजयवर्मा परशुरामः च निर्णीतवन्तौ यत् गुरवे दक्षिणा दातव्या इति ।

अतः तौ गुरुं पृष्टवन्तौ - ''गुरुदक्षिणारूपेण किं दातव्यम् ?'' इति ।

तदा द्रोणः तौ अवदत् - ''मत्तः ये शिक्षणं प्राप्तवन्तः तेषु अत्यधिकदक्षौ प्रतिभाशालिनौ च भवन्तौ एव । या विद्या अत्र प्राप्ता तस्याः

उपयोगः क्रियतां, तस्यां दक्षता वर्ध्यतां, कौशलं च सम्पाद्यताम् । यदा योग्यः कालः प्राप्यते तदा अहं स्वयम् आगत्य गुरुदक्षिणां प्राप्स्यामि'' इति ।

चत्वारि वर्षाणि अतीतानि । पितुः मरणस्य अनन्तरं विजयवर्मा त्रिपुर्याः भूस्वामी जातः । भूस्वामिदायित्वं निर्वहन् अपि सः मल्लयुद्धे रुचिं रक्षितवान् ।

प्रतिवर्षं सः मल्लयुद्धस्पर्धाम् आयोजयति स्म । यः सर्वान् मल्लान् जयति, तेन सह सः स्वयं मल्लयुद्धं करोति स्म ।

सः तं वदति स्म - ''यदि भवान् मां जयेत् तर्हि अहं भवतः सम्माननं करिष्यामि । यदि भवतः पराजयः भवेत् तर्हि भवता इतः परं कुत्रापि मल्लयुद्धं न करणीयम् । भवतः जीवनं सुखमयं यथा भवेत् तथा अर्थव्यवस्थां तु अहं करिष्यामि'' इति ।

'स्पर्धायां भूस्वामी पराजितः चेत् एकवारमात्रं सम्मानः प्राप्यते । किन्तु स्वयं पराजयः प्राप्तः चेत् आजीवनं सुखं प्राप्यते । मल्लयुद्धश्रमः पुनः जीवने करणीयः एव न भविष्यति । अतः भूस्वामिना सह मल्लयुद्धे पराजयः एव वरम्' इति चिन्तितवन्तः सर्वे मल्लाः ।

अतः महामल्लाः अन्यान् मल्लान् पराजेतुं महान्तम् उत्साहं प्रदर्शयन्ति स्म । किन्तु विजयवर्मणा सह मल्लयुद्धे पराजयम् एव महाभाग्यं मन्यमानाः ते स्वस्य पराजयं ससन्तोषम् अङ्गीकुर्वन्ति स्म ।

द्रोणः विजयवर्मणः एतत् कपटनाटकं श्रुतवान् । सः परशुरामम् आनाय्य अवदत् -



''विजयवर्मणा आयोज्यमानायाः मल्लयुद्धस्पर्धायाः विषये मया श्रुतम् । तस्यां स्पर्धायां भवता किमर्थं भागः न गृहीतः अद्यावधि ?'' इति ।

तदा परशुरामः विनयेन अवदत् - ''गुरुवर्य ! स्वस्य महामल्लत्वविषये अधिकः गर्वः अस्ति विजयवर्मणः । समर्थेषु अपि मल्लेषु सुखानुकूल्यादीनाम् इच्छां जागरय्य सः विनायासं जयं प्राप्नुवन् अस्ति । यद्यपि विजयवर्माणं जेतुं मम शक्तिः अस्ति, तथापि तं पराजेतुम् इच्छा नास्ति मम । यदि अहं तं पराजयेयं तर्हि तदीयस्य अहङ्कारस्य आघातः भवेत् । तस्मात् यत्किमपि अकार्यं कर्तुम् अर्हति सः'' इति ।

एतत् युक्तम् इति अभासत द्रोणस्य मनसि । 'विजयवर्मणः कारणतः, न ज्ञायते कियन्तः



मल्लाः अकर्मण्यतां प्राप्य मल्लक्षेत्रात् दूरं गताः इति । ते सामर्थ्यवन्तोऽपि स्वसामर्थ्यं प्रकाशयितुं सज्जाः न । सुखजाले पतिताः ते मल्लत्वस्यैव द्रोहम् आचरन्तः सन्ति' इति चिन्तितवान् विजयवर्मा निर्णीतवान् यत् गुरुदक्षिणाव्याजेन परशुरामद्वारा विजयवर्माणं योग्यं पाठं पाठयिष्यामि, तं योग्ये मार्गे प्रवर्तयिष्यामि' इति ।

ततः द्रोणः परशुरामेण सह त्रिपुरीं गतवान् । 'विश्रान्तिगृहे भवान् तिष्ठतु' इति परशुरामम् उक्त्वा सः विजयवर्मणः समीपं गतवान् ।

विजयवर्मा गुरुं सादरं स्वागतीकृतवान् । कुशलप्रश्नानन्तरं द्रोणः विजयवर्माणम् उक्तवान् – ''मया पूर्वम् एव उक्तं यत् मत्तः विद्याम् अधीतवन्तु भवान् परशुरामः च अति-समर्थौ इति । भवतोः मल्लयुद्धं द्रष्टव्यम् इति मम प्रबला इच्छा अस्ति । अतः भवान् भुस्वाम्यहङ्कारं परित्यज्य मया बोधितं मल्ल-विद्याकौशलं प्रदर्शयन् परशुरामं पराजयतु'' इति ।

विजयवर्मा गुरोः प्रस्तावं सहर्षम् अङ्गी-कृतवान् ।

विश्रान्तिगृहम् आगतः द्रोणः परशुरामम् उक्तवान् – ''विजयवर्मणा सह प्रवर्तिष्यमाणे युद्धे भवता एव जयः प्राप्तव्यः । सः एव भवता दातव्या गुरुदक्षिणा । भवता अन्यत् अपि कार्यं करणीयम् । जयानन्तरं जनेषु भवता भावः उत्पादनीयः यत् भवता जयः न प्राप्तः, अपि तु पराजयः प्राप्तः इति । एतत् कथं शक्यते इति भवता अहं न प्रष्टव्यः । मल्लयुद्धं बोधयन् अहं भवन्तं नीतिशास्त्रं लौकिकज्ञानम् चापि बोधितवान् अस्मि । तयोः उपयोगेन

भवता कार्यं साधनीयम्'' इति ।

अनन्तरदिने प्रातः एव विजयवर्म-परशुरामयोः मल्लयुद्धं प्रवृत्तम् । इतः पूर्वं विजयवर्मा यैः सह मल्लयुद्धं कृतवान् ते सर्वे सुखाशया पराजयं स्वयम् अङ्गीकृतवन्तः आसन् । किन्तु परशुरामस्य कथा अन्या । परशुरामः मल्लयुद्धनिपुणः । सुखाद्याशा अपि तस्य न आसीत् ।

उभौ अपि स्वसामर्थ्यस्य पूर्णम् उपयोगं कुर्वन्तौ युद्धं कृतवन्तौ । जनाः महत्या उत्कण्ठया एतत् पश्यन्तः आसन् । कस्य जयः भवेत् इति कोऽपि ऊहितुं न शक्नोति स्म । परशुरामः सङ्कल्पितवान् आसीत् यत् एतस्मिन् युद्धे जयं प्राप्य गुरुदक्षिणा अर्पणीया इति । अतः सः पूर्णेन मनसा मल्लयुद्धे प्रवृत्तः जातः । अन्ते सः स्वस्य लक्ष्यं साधयितुं शक्तवान् । सः विजयवर्माणं पराजितवान् ।

विजयवर्मणः पराजयं दृष्ट्वा जनाः आश्चर्येण स्तब्धाः । तदा परशुरामः सर्वान् प्रणम्य अवदत् – ''भूस्वामी मल्लयुद्धे अतिनिपुणः । वस्तुतः अद्य ममैव पराजयः अभविष्यत् । किन्तु मादृशः मल्लयोद्धा पराजयं प्राप्य सुखभोगादिषु लीनः न भवेत् इति चिन्तयन् भूस्वामी स्वयं पराजितः अभवत् । अतः वास्तविकतया विजेता अस्ति भूस्वामी एव'' इति ।

एतत् श्रुत्वा जनाः महता उत्साहेन करताडनं कृतवन्तः । विजयवर्मा दीर्घं निश्श्वस्य अवदत् – ''परशुरामः अनुपमः मल्लयोद्धा । तेन सह प्रवृत्ते मल्लयुद्धे एषः द्वितीयः पराजयः मम । युद्धविद्याक्षेत्रे स्वार्थस्य गर्वस्य वा न किमपि स्थानम् । अद्यपर्यन्तम् अहं मल्लयोद्धृषु सुखस्य प्रलोभनम् उत्पाद्य तान् पराजितान् जायमानान् दृष्ट्वा मदीयम् अहङ्कारं तर्पयामि स्म । अद्य मम सहपाठिना मदीयः स च गर्वः चूर्णीकृतः । एतदर्थम् अहं हृत्पूर्वकं परशुरामम् अभिनन्दामि'' इति ।

उभौ अपि शिष्यौ प्रशंसकदृष्ट्या पश्यन् द्रोणः अवदत् – ''भवन्तौ उभौ अपि मया इष्टां गुरुदक्षिणां दत्तवन्तौ स्तः । तस्मात् अहं नितरां सन्तुष्टः अस्मि । इतःपरं भवतोः मल्लयुद्धे कौशलस्य प्रतिभायाः चैव हि स्थानं भविष्यति इति अहं चिन्तयामि । मल्लयोद्धॄणां जीवने इतःपरम् आलस्यस्य सुखेच्छायाः च स्थानं न भविष्यति इति अहं भावयामि'' इति ।



# भारतम् अवगम्यताम्

१. पण्डितजवाहरलालवर्येण त्रीणि पुस्तकानि लिखितानि । तेषां नामानि प्रकाशनवर्षं च अधः दत्तमस्ति । यथायोग्यं योज्यताम् ।

*(अ) आत्मकथा* — १) १९३४

*(आ) डिस्कवरी आफ् इण्डिया* — २) १९३६

*(इ) ग्लिंप्सस् आफ् वर्ल्ड हिस्टरी* — ३) १९४६

२. मोतीलालनेहरूवर्यस्य वृत्तिः का आसीत्?

(अ) प्राध्यापकः

(आ) न्यायवादी

(इ) वैद्यः

३. एतस्मिन् चित्रे नेहरूवर्यः कस्य हस्ते स्थितायां घट्यां समयं पश्यति ?



४. पण्डितनेहरूवर्यस्य भगिनी विजयलक्ष्मीपण्डितवर्या कस्मिन् देशे राजदूतपदम् अलङ्कृतवती आसीत् ?

(अ) चीनदेशे (आ) अमेरिकायाम्

(इ) रशियायाम्

५. प्रधानमन्त्रिपदं यदा प्राप्तं तदा इन्दिरावर्या किंवर्षीया आसीत् ?

अ) ४९ आ) ५३ इ) ५७

६. प्रधानमन्त्रिस्थानस्य प्राप्तितः पूर्वम् इन्दिरागान्धी केन्द्रसचिवा आसीत् । कस्य विभागस्य सचिवा आसीत् सा ?

(अ) सूचनाप्रसारमन्त्रालयस्य

(आ) शिक्षामन्त्रालयस्य

(इ) स्वास्थ्यमन्त्रालयस्य

७. कः प्रमुखः शासननियमः इन्दिरा-वर्यायाः गौरवम् अवर्धयत् ?

(अ) जलमार्गाणां राष्ट्रियीकरणम्

(आ) अयःकेन्द्राणां राष्ट्रियीकरणम्

(इ) वित्तकोषाणां राष्ट्रियीकरणम्

८. कस्मिन् वर्षे इन्दिरागान्धिवर्या द्वितीय-वारं प्रधानमन्त्रिस्थानं प्राप्तवती ।

(अ)१९७१, (आ) १९७५ (इ) १९८०

*(उत्तराणि अग्रिमे मासे)*

### *'अगस्ट्'मासस्य प्रश्नानाम् उत्तराणि*

*१. अ - ३, आ - १, इ - २*

*२. रामचन्द्रः ।*

*३. बालगङ्गाधरतिलकः । गणेशचतुर्थी ।*

*४. चित्रेऽस्मिन् होली-दीपावल्योः अंशाः मिश्रिताः सन्ति । तौ उत्सवौ भवतः विभिन्ने काले ।*

*५. आ*



# विघ्नेश्वरः

होमकुण्डात् उत्पन्नस्य भयङ्करजीविनः अदृश्यतायाः अनन्तरं कालः विघ्नासुर-रूपं धृतवान् । कालपाशं दूरे क्षिप्तवान् च । कालपाशः भ्रमन् भयङ्करध्वनिम् उत्पादयन् सर्वत्र प्रसृतः जातः । अभिनन्दनः तस्य छेदनाय प्रयत्नं कृतवान् । किन्तु असफलः सन् सः भूमौ अपतत् । कालपाशः स्वस्य व्याप्तिं विस्तारयन् जीविनां नाशने उद्युक्तः जातः । एतत् दृष्ट्वा खिन्नाः जगद्धितैक-काङ्क्षिणः वसिष्ठादिमुनयः अन्यां गतिम् अपश्यन्तः ब्रह्मणः प्रार्थनां कृतवन्तः ।

''कालपाशात् रक्षणं कर्तुं न कोऽपि समर्थः । कालप्रवाहम् अवरुध्य कालयमं निग्रहीतुं सामर्थ्यं भवति गणेशस्य एकस्य एव'' इति अवदत् ब्रह्मा । ततः ते सर्वे सम्भूय गणेशं प्रार्थितवन्तः - ''हे देव ! जगतः रक्षणं करोतु'' इति ।

महागणपतिः स्वस्तिकपीठे आसीनः सन् तेभ्यः अभयमुद्रां दर्शयित्वा स्वस्य हस्ते स्थितं पाशं प्रसारितवान् । यथा जालं पक्षिणम् आवृत्य गृह्णाति तथा गणेशस्य पाशः काल-पाशम् अगृह्णात् । पराजयं प्राप्तवान् कालः नितरां क्रुद्धः सन् विघ्नासुररूपं प्राप्य कालदण्डं प्रयुक्तवान् । एतत् दृष्टवान् गणेशः स्वस्य अङ्कुशं प्रयुक्तवान् । स च अङ्कुशः विघ्नासुरस्य पृष्ठास्थ्नि संलग्नः जातः ।

अङ्कुशस्य आघातेन विघ्नासुरः स्तब्धः जातः । अङ्कुशः तु क्षणे क्षणे विघ्नासुरस्य शरीरम् अ२०७कतया प्रविशन् बहुधा पीडयति स्म । वेदनाम् असहमानः विघ्नासुरः गणेशस्य पादयोः मध्ये प्रविष्टवान्, तत्रैव बन्दी जातः च ।



ततः कालयमः विघ्नासुरस्य शरीरात् निर्गत्य गणेशस्य पुरतः स्थित्वा प्रार्थनास्वरेण अवदत् - ''गणेशवर्य ! भवतः विश्वपाशः तु अतिशयशक्तिशाली । मम कालपाशः तु एतस्यां पृथिव्यां सूर्योदयतः सूर्यास्तपर्यन्तं प्रभावं दर्शयितुम् अर्हः । समग्रं विश्वं नियन्त्रयितुम् अर्हस्य भवतः अङ्कुशस्य पुरतः मम दण्डः सर्वथा अकिञ्चित्करः इव भासते । पर्वताकारकं भूतं भवद्वाहनरूपी मूषकः लीलया संहृतवान् । भवान् विघ्नासुरस्य अधिपतिः विघ्नेश्वरः अस्ति । हे देव ! मम रक्षां करोतु कृपया'' इति ।

तदा विघ्नेश्वरः अवदत् - ''हे कालयम ! भवान् अन्यस्य कार्ये आत्मानं प्रवर्तयन् कष्टं स्वयं स्वागतीकृतवान् अस्ति । किमर्थम् एतत् करणीयं भवता ? स्वकर्तव्यमात्रस्य पालनात् तु न भवेत् खलु कापि आपत्तिः'' इति अवदत् ।

कालयमः स्वस्य कर्णौ गृहीत्वा त्रिवारम् उपवेशनोत्थानं कृत्वा - ''भगवन् ! मम मतिः विकला जाता आसीत् । अतः इन्द्रस्य वचनम् अनुसरन् अहम् एतादृशम् अपराधं कृतवान् । हे विघ्नेश्वर ! यः भवति विश्वासं कुर्वन् भवन्तं पूजयति तस्य कार्ये विघ्नः कदापि न भवति खलु ? अहम् अपि भवद्भक्तः एव । मां दयया अनुगृह्णातु'' इति क्षमां प्रार्थयन् कालः विघ्नेश्वरस्य अनुज्ञां प्राप्य ततः निर्गतवान् ।

विघ्नेश्वरः कालयमं यदा पराजितवान् तदा कालपाशात् मोक्षं प्राप्तवन्तः अभिनन्दनादयः निद्रातः इव मूर्च्छावस्थातः उत्थितवन्तः । तस्मिन् समये तत्र पुष्पवृष्टिः जाता । उत्थिताः ते - 'विनायक !' 'विघ्नराज !' इत्यादिभिः वचनैः गणेशस्य स्तुतिं कृतवन्तः ।

तस्मात् दिनात् जनाः शुभकरस्य कार्यस्य आरम्भात् पूर्वं स्वस्तिकाकारिकायाः रङ्ग-वल्ल्याः लेखनं, हरिद्राराशौ विघ्नेश्वरस्य आवाहनं च आरब्धवन्तः । गच्छता कालेन एषा सर्वत्र परम्परा जाता ।

कालपुरुषम् अपि पराजितवति विघ्नेश्वरे ये विश्वासं कुर्वन्ति ते कालप्रवाहम् अपि विरुध्य जयं प्राप्तुम् अर्हन्ति'' इति वदन् पावनमिश्रः कथां समापितवान् ।

एकदा काचित् बालिका पावनमिश्रम् अनुरोधपूर्वकं कस्यचित् चित्रस्य समीपं नीत-वती । तस्मिन् चित्रे काचित् सुन्दरी तरुणी जानुना उपविश्य विघ्नेश्वरं प्रार्थयन्ती आसीत् । 'एतच्चित्रसम्बन्धिनीं कथां श्रावयतु' इति सा तम् उक्तवती । पावनमिश्रः तां कथाम् आरब्धवान् ।

विघ्नेश्वरस्य आराधनतः कस्मिंश्चित् परिवारे काचित् सुन्दरी कन्या उत्पन्ना । जन्मसमनन्तरम् एव सा प्रसूतिगृहे स्थापितं विघ्नेश्वरस्य चित्रं पश्यन्ती विस्फारितनयना सती गणेशेन आहूयमाना इव किलकिलेति हसितवती ।

आन्दोलिकायां शयाना सा गणेशस्य चित्रं पश्यन्ती मन्दहासं प्रकटयन्ती, किलकिलहासम् अपि कुर्वती बाललीलां दर्शयति स्म । तस्याः बालिकायाः नाम 'सुन्दरी' इत्येव निश्चितम् । अन्वर्थनाम्नी सा असाधारणरूपवती एव आसीत् ।

दिनानि गतानि । सा विवाहयोग्यं वयः प्राप्तवती । सा बुद्धिमती गुणवती चापि आसीत् । सदा अन्येषां हितविषये एव सा वार्तालापं करोति स्म । तस्मात् सर्वे तां 'ज्ञानसुन्दरी' इति नाम्ना निर्दिशन्ति स्म ।

सुन्दरीविषये जनाः वदन्ति स्म यत् शापकारणतः भूलोकम् आगता देवकन्या एषा इति । तां परिणेतुं कुबेरसदृशाः महाधनिकाः उच्चाधिकारिणः च अहमहमिकां दर्शयन्ति स्म । कदाचित् तस्याः मातापितृभ्यां ज्ञातं यत् सुन्दर्याः गुणसौन्दर्यादिकं श्रुत्वा कश्चन लघुदेशस्य राजा तां परिणेतुम् इच्छन् आगच्छन् अस्ति इति ।

एतत् ज्ञातवती सुन्दरी विघ्नेश्वरप्रतिमायाः पुरतः उपविश्य प्रार्थितवती – ''हे भगवन् ! आ बाल्यात् एव अहं भवति विश्वासवती अस्मि । पारिवारिकसागरे आत्मनः मज्जनं न इच्छामि अहम् । अतः मां वृद्धां करोतु कृपया । मह्यं ज्ञानसम्पदं ददातु । मम जन्म



सार्थकं करोतु'' इति । अनन्तरक्षणे एव तस्याः केशाः श्वेतवर्णीयाः जाताः । तस्याः कपोलेषु वल्यः उत्पन्नाः ।

तस्याः एतत् रूपं दृष्ट्वा मातापितरौ सखेदम् उक्तवन्तौ – ''सुन्दरि ! किम् एतत् जातम् ?'' इति ।

तदा सुन्दरी उक्तवती – ''अहं न सुन्दरी, न वा कन्या । अहं तु सर्वेषाम् 'अम्बा' अस्मि । सन्तोषे प्राप्तव्ये किमर्थं चिन्तां कुर्वन्ति भवन्तः ? भवद्भ्यां मह्यं जन्म दत्तम् । तत् सार्थकं कर्तुं गणेशः मह्यं मदभीष्टं वरं दत्तवान् अस्ति । मत्तः अपि ये अज्ञानिनः सन्ति तान् मदीयम् अल्पं ज्ञानम् अवलम्ब्य हितं बोधयिष्यामि । ज्ञानिभ्यः ज्ञानं प्राप्तुं प्रयासं करिष्यामि । ये अज्ञानेन आवृताः सन्ति ते बालसमानाः । अतः ते सर्वे मम पुत्राः एव । अहं तेषाम् अम्बा अस्मि । अद्यैव मम जन्मदिनम् । शुभकरं दिनम् एतत् । अहम्



इतः निर्गच्छन्ती अस्मि लोकसञ्चाराय । कृपया आशीर्वादेन भवद्भिः अनुग्राह्या अहम्'' इति ।

तस्मिन् एव समये राजा तत्र आगतः । तम् अम्बा पृष्टवती – ''जनानां धनस्य, प्राणानां, गौरवस्य, अबलानां च रक्षणं येन भवता करणीयं सोऽयं भवान् काञ्चित् कन्याम् अपहर्तुम् आगतः ! किं लज्जा न भवति भवतः ? भवान् लुण्ठाकानां नायकः अस्ति, उत राजा ?'' इति ।

अम्बायाः मुखात् एतादृशानि वचनानि श्रुत्वा राजा अवनतशिरस्कः जातः । सः स्वस्य किरीटं खड्गं च दूरे स्थापयित्वा अम्बां साष्टाङ्गं नमस्कृतवान् । ततः सः अवदत् – ''महादेवि ! भवत्याः दर्शनतः मम अज्ञानम् अपगतम् । अद्यैव अहं राजाडम्बरं परित्यज्य जनसेवकरूपेण शासनं करिष्यामि'' इति ।

एतत् दृष्ट्वा जनाः अम्बायाः प्रशंसां कृतवन्तः बहुधा । राजा सानुरोधम् उक्तवान् यत् शिबिकायाम् उपविश्य देशाटनं करोतु, शिबिकाम् अहं व्यवस्थापयिष्यामि इति ।

किन्तु अम्बा एतां प्रार्थनां तिरस्कुर्वती अवदत् – ''राजन् ! ये पादरक्षामात्रम् अपि क्रेतुं न शक्नुवन्ति तान् शिबिकायाम् उपविष्टा अहं कथं वा उपदेष्टुम् अर्हा भवेयम् ? भवान् जनानां शिक्षणं, तेषाम् आनुकूल्यकल्पनं च यथाशक्ति चिन्तयतु । साधारणजनानां मध्ये वसन्ती अहं यथाशक्ति कार्यं करिष्यामि । विघ्नेश्वरः तत्सहोदरः सुब्रह्मण्येश्वरः च मम योगक्षेमं पश्यतः'' इति ।

एतदनन्तरम् अम्बा ज्ञानपीठत्वेन प्रसिद्धं कञ्चन मठं गतवती । तस्य पीठस्य अधिपतिं प्रणम्य सा निवेदितवती – ''महानुभाव ! मां ज्ञानम् उपदिशतु'' इति ।

तदा पीठाधिपतिः अवदत् – ''अम्ब ! भवती नारी अस्ति । ज्ञानोपदेशं प्राप्य किं कुर्यात् भवती ?'' इति ।

तदा अम्बा अवदत् – ''किं जलं दीपः च पुरुषाणां निमित्तम् एव भवति ? नार्याः किमपि कार्यं किं न भवति ? अन्धस्य हस्ते स्थितः दीपः किम् अन्येषां कृते प्रकाशं न ददाति ? जीविनाम् अन्तः स्थितः आत्मा पुमान् उत स्त्री ? ज्ञानिनः वदन्ति यत् सर्वेषु स्थितः आत्मा अभिन्नः इति । एवं स्थिते जन्म आधारीकृत्य उच्चनीचादिभेदकल्पनं किम् उचितम् ? ज्ञाने कस्य अधिकारः नास्ति ?'' इति ।

एतत् श्रुत्वा सः पीठाधिपतिः अवदत् – ''आर्ये ! एतस्मिन् ज्ञानपीठे उपवेष्टुम् अर्हा

भवती एव, न तु अहम्'' इति ।

''एतादृशस्य पीठस्य, मठादीनां च का आवश्यकता ? जनाः यथा जानीयुः तथा सरलया शैल्या जनानां समीपं गत्वा ज्ञानस्य उपदेशः वरं खलु ?'' इति अवदत् अम्बा ।

''भवत्या युक्तम् उच्यते अम्ब ! अहम् अपि एतस्य सिद्धान्तस्य पालनं करिष्यामि'' इति शिरः नमयित्वा उक्तवान् पीठाधिपतिः ।

अम्बा अग्रे गतवती । कस्यचित् कूपस्य समीपे काचित् महिला स्थिता आसीत् । कूपात् जलस्य नयनस्य विषये काचित् महिला साधिकारं वदति स्म - ''या कापि आदौ आगता स्यात् नाम । किं तेन ? आदौ अहं जलं नेष्यामि । ततः एषा जलं नयतु, तदनन्तरं सा नयतु । अन्ये दूरे स्थिता सा नयतु'' इति ।

अनतिदूरे स्थिता काचित् बालिका दीन-स्वरेण अवदत् - ''अम्ब ! मम कण्ठः शुष्कः अस्ति । पानाय किञ्चित् जलं दीयताम्'' इति ।

तदा त्रिचतुराः महिलाः एकस्वरेण उक्त-वत्यः - ''अरे, दूरं गच्छतु । भवत्याः छायायाः स्पर्शः अपि न भवेत्'' इति ।

एतदभ्यन्तरे दूरात् आगता नितरां श्रान्ता सा बालिका मूर्च्छां प्राप्य पतिता ।

तदा झटिति अग्रे गता अम्बा चषकेण जलं नीत्वा तस्याः मुखस्य उपरि सेचनं कृतवती । यदा सा बालिका उत्थिता तदा



पानाय तस्यै जलं दत्तवती । एतत् दृष्ट्वा अन्याः महिलाः आक्षेपयुक्तेन स्वरेण उक्तवत्यः – "अयि अम्ब ! किम् एतत् कृतं भवत्या ? सा तु निम्नजातीया बालिका । तस्यै किमर्थं जलं दत्तम् ? तस्याः स्पर्शः अपावित्र्यकरः खलु ?" इति ।

तदा अम्बा शान्तेन स्वरेण उक्तवती – "भगिन्यः ! किं जातिचिन्तनेन ? मम नाडीषु यत् रक्तं प्रवहति तदेव रक्तं प्रवहति एतस्याम् अपि । अतः तस्यै जलं दत्तं मया" इति ।

ततः सा अग्रे गत्वा तासां घटानाम् अन्तः दृष्टिं प्रसार्य – "मया चिन्तितम् आसीत् यत् विशिष्टाः भवत्यः क्षीरम् एव पिबन्ति, न तु जलम् इति । भवतीनां कृते जलं किमर्थम् ? भवत्यः क्षीरं पिबन्तु । अस्मभ्यं जलं यच्छन्तु" इति उक्तवती ।

एतत् श्रुत्वा ताः चतस्रः लज्जया शिरः अधः कृतवत्यः । ताभिः विवेकः प्राप्तः आसीत् ।

एतदनन्तरम् अम्बा अग्रे गता । एकत्र अजा बलिरूपेण समर्प्यमाणा आसीत् । जनाः भीतिमिश्रितया भक्त्या तत्र स्थिताः आसन् ।

तत्र गता अम्बा अवदत् – "जगज्जननि ! एते अहो, कीदृशम् अन्याय्यं कुर्वन्तः सन्ति । एते मांसे उपस्करादिकं योजयित्वा खादितुम् इच्छन्ति । अतः भवतीं रक्तप्रियां वदन्तः भवत्याः अपमाननं कुर्वन्ति । मातुः अपमाननं ये कुर्वन्ति ते पुत्रपदेन निर्देष्टुम् अर्हाः न भवन्ति खलु" इति ।

तस्याः वचनं श्रुत्वा तत्र सम्मिलिताः सर्वे "शान्तं पापम् । शान्तं पापम् । प्रतिहतम् अमङ्गलम् । यदि देवी क्रुद्धा भवेत् तर्हि सर्वम् अपि भस्मसात् कुर्यात्" इति ।

तदा अम्बा उक्तवती – "पुत्रैः किमपि न दत्तम् इत्यतः किं काऽपि माता पुत्रान् खादेत् ? भवतां भीतिः निष्कारणा । भयम् एव भवन्तः भक्तिं वदन्ति । आत्मनः इच्छां पूरयितुं मातुः भक्तिं व्याजीकृतवन्तः सन्ति भवन्तः । यस्मिन् दिने वास्तविकी भक्तिः भवत्सु भविष्यति तस्मिन् दिने भवत्सु कापि भीतिः न भविष्यति । कापि आपत्तिः अपि न भविष्यति" इति । एतदनन्तरं ते यथा अवगच्छेयुः तथा सरलया शैल्या तान् भक्तिमार्गम् उपदिष्टवती सा ।





# राजकुमारी चन्द्रमाश्च

पुरा राजस्थानराज्ये कस्मिंश्चित् नगरे काचन राजकुमारी निवसति स्म । तस्याः नाम लीलावती इति । अष्टवर्षीया सा बाला कदाचित् मधुराणि भक्ष्याणि अधिकतया खादितवती । तस्मात् सा अस्वस्था सञ्जाता ।

राजवैद्येन तस्याः परीक्षा कृता । ततः सः राजानम् आहूतवान् । राजा भीत्या धावन् आगतः । सः पुत्रीं पश्यन् पृष्टवान् - ''पुत्रि ! किम् अभवत् भवत्याः ? किम् इच्छति भवती ?'' इति ।

तदा राजकुमारी उक्तवती - ''तात ! चन्द्रमाः आवश्यकः मह्यम् । सः यदा लभ्यते तस्मिन् क्षणे एव अहं स्वस्था भविष्यामि । शय्यातः उत्थाय क्रीडितुं प्रभविष्यामि च'' इति ।

सः राजा महता अहङ्कारेण युक्तः, अश्रुत-ग्राही च । यदा पुत्र्या एवम् उक्तं तदा सः झटिति गर्वेण उक्तवान् - ''एषः लघुविषयः । एतदर्थं भवती अस्वस्था सञ्जाता किम् ? चन्द्रमाः भवत्याः हस्ते आगतः इत्येव चिन्तयतु'' इति ।

ततः सः भटं कञ्चित् अज्ञापितवान् - 'सेनापतिम् अचिरात् अत्र आनयतु' इति ।

सेनापतिः यदा आगतः तदा - ''राज-कुमारी चन्द्रम् इच्छति । चन्द्रस्य प्राप्त्यनुक्षणं सा स्वस्था भविष्यति । यथाकथञ्चित् वा भवान् चन्द्रम् आनयेत् । श्वः प्रातः-कालाभ्यन्तरे चन्द्रः अत्र भवेत् एव'' इति उक्तवान् राजा ।

''चन्द्रः !'' इति आश्चर्ययुक्तेन स्वरेण वदन् सः सेनापतिः राजानम् उक्तवान् - ''महाप्रभो ! राजकुमार्या यद्यद् इष्टं तत् सर्वम् आनीय दत्तम् अस्ति । गजदन्तः, मौक्तिकं, रत्नं, माणिक्यम् इत्यादीनि राजकुमार्यै आनीय दत्तानि । किन्तु चन्द्रम् आनेतुं न अहं समर्थः । अस्माभिः आनेतुं न शक्यः चन्द्रः । यतः सः इतः पञ्चसहस्रयोजनदूरे अस्ति । अपि च अस्माकं प्रासादस्य यः आकारः ततः अपि

पानाय तस्यै जलं दत्तवती । एतत् दृष्ट्वा अन्याः महिलाः आक्षेपयुक्तेन स्वरेण उक्तवत्यः - ''अयि अम्ब ! किम् एतत् कृतं भवत्या ? सा तु निम्नजातीया बालिका । तस्यै किमर्थं जलं दत्तम् ? तस्याः स्पर्शः अपावित्र्यकरः खलु ?'' इति ।

तदा अम्बा शान्तेन स्वरेण उक्तवती - ''भगिन्यः ! किं जातिचिन्तनेन ? मम नाडीषु यत् रक्तं प्रवहति तदेव रक्तं प्रवहति एतस्याम् अपि । अतः तस्यै जलं दत्तं मया'' इति ।

ततः सा अग्रे गत्वा तासां घटानाम् अन्तः दृष्टिं प्रसार्य - ''मया चिन्तितम् आसीत् यत् विशिष्टाः भवत्यः क्षीरम् एव पिबन्ति, न तु जलम् इति । भवतीनां कृते जलं किमर्थम् ? भवत्यः क्षीरं पिबन्तु । अस्मभ्यं जलं यच्छन्तु'' इति उक्तवती ।

एतत् श्रुत्वा ताः चतस्रः लज्जया शिरः अधः कृतवत्यः । ताभिः विवेकः प्राप्तः आसीत् ।

एतदनन्तरम् अम्बा अग्रे गता । एकत्र अजा बलिरूपेण समर्प्यमाणा आसीत् । जनाः भीतिमिश्रितया भक्त्या तत्र स्थिताः आसन् ।

तत्र गता अम्बा अवदत् - ''जगज्जननि ! एते अहो, कीदृशम् अन्याय्यं कुर्वन्तः सन्ति । एते मांसे उपस्करादिकं योजयित्वा खादितुम् इच्छन्ति । अतः भवतीं रक्तप्रियां वदन्तः भवत्याः अपमाननं कुर्वन्ति । मातुः अपमाननं ये कुर्वन्ति ते पुत्रपदेन निर्देष्टुम् अर्हाः न भवन्ति खलु'' इति ।

तस्याः वचनं श्रुत्वा तत्र सम्मिलिताः सर्वे ''शान्तं पापम् । शान्तं पापम् । प्रतिहतम् अमङ्गलम् । यदि देवी क्रुद्धा भवेत् तर्हि सर्वम् अपि भस्मसात् कुर्यात्'' इति ।

तदा अम्बा उक्तवती - ''पुत्रैः किमपि न दत्तम् इत्यतः किं काऽपि माता पुत्रान् खादेत् ? भवतां भीतिः निष्कारणा । भयम् एव भवन्तः भक्तिं वदन्ति । आत्मनः इच्छां पूरयितुं मातुः भक्तिं व्याजीकृतवन्तः सन्ति भवन्तः । यस्मिन् दिने वास्तविकी भक्तिः भवत्सु भविष्यति तस्मिन् दिने भवत्सु कापि भीतिः न भविष्यति । कापि आपत्तिः अपि न भविष्यति'' इति । एतदनन्तरं ते यथा अवगच्छेयुः तथा सरलया शैल्या तान् भक्तिमार्गम् उपदिष्टवती सा ।



सर्वमपि सत्यमेव स्यात् । किन्तु अस्मिन् विषये राजकुमार्याः अभिप्रायः कः इति प्रथमम् अस्माभिः ज्ञातव्यम् । तस्याः दृष्ट्या चन्द्रः कियद्दूरे अस्ति, तस्य परिमाणं कियत् इति अस्माभिः आदौ ज्ञातव्यम्'' इति उक्तवान् विदूषकः ।

एवं वदन्नेव सः राजकुमार्याः समीपं गतः । तं दृष्ट्वा राजकुमारी उत्कण्ठिता सती पृष्टवती - ''चन्द्रः आनीतः किम् ?'' इति ।

''चन्द्रस्य आनयनं न महाविषयः । किन्तु एतत् मया आदौ अवगन्तव्यं यत् भवत्याः दृष्ट्या चन्द्रः इतः कियद्दूरे अस्ति इति । तस्य परिमाणं कियत्, तस्य निर्माणं केन वस्तुना जातम् इत्यादिकमपि ज्ञातव्यम् अस्ति मया'' इति विदूषकेण राजकुमारी पृष्टा ।



''पूर्वमेव अस्मिन् विषये अहं प्रष्टव्या आसम् । चन्द्रः मम कनिष्ठाङ्गुल्याः नखः इव अस्ति । वातायनात् बहिः स्थितः वृक्षः यावत् उन्नतः, चन्द्रोऽपि तावति एव औन्नत्ये अस्ति । सः वृक्षस्य शाखासु लम्बमानः दृश्यते क्वचित् । सः कान्त्या शोभते अपि । तस्य निर्माणं तु सुवर्णेनैव जातं स्यात्'' इति राजकुमार्या उक्तम् ।

''राजकुमारि ! चन्द्रस्य स्वरूपं मया ज्ञातम् इदानीम् । अद्य रात्रौ एव वृक्षम् आरुह्य शाखासु लम्बमानं तम् अत्र अवश्यम् आनेष्यामि'' इति उक्त्वा विदूषकः ततः निर्गतवान् । अनन्तरं सः स्वर्णकारम् आहूय राजकुमार्याः कथनस्य अनुगुणं सुवर्णस्य चन्द्रमेकं कारितवान् ।

स्वर्णकारः सुवर्णचन्द्रं निर्माय तं सुवर्णहारे योजयित्वा विदूषकस्य हस्ते ददत् पृष्टवान् - ''कः विषयः ? एवं किमर्थं कारितं भवता ?'' इति ।

तदा विदूषकः हसन् उक्तवान् - ''किं न दृश्यते ? एषः अस्ति चन्द्रः'' इति ।

स्वर्णकारः पुनः उक्तवान् - ''किन्तु चन्द्रः त्रिसहस्रयोजनदूरे अस्ति । अपि च सः गोलाकारकः'' इति ।

विदूषकः किमपि अवदन् ततः प्रस्थाय सुवर्णचन्द्रं राजकुमार्याः हस्ते स्थापितवान् । तत् दृष्ट्वा राजकुमारी महान्तं सन्तोषं प्राप्तवती । अनन्तरदिने एव सा स्वस्था जाता । उद्याने क्रीडनार्थमपि गता ।

किन्तु राज्ञः मनः अनेन न सन्तुष्टम् । यतः तस्य चिन्ता आसीत् यत् रात्रौ यदा राजकुमारी आकाशे चन्द्रं पश्यति तदा सा

स्वहस्ते स्थितः चन्द्रं कृतकः, आकाशे स्थितः चन्द्रः एव वास्तविकः इति ज्ञात्वा पुनः अस्वस्था भवेत् इति ।

राजा विदूषकं स्वसन्देहम् उक्तवान् । तदा विदूषयः हसन् एव - ''अस्मिन् विषये भवतः चिन्ता मास्तु । आस्थाने स्थिताः पण्डिताः चन्द्रस्य विषये अनेकान् अभिप्रायान् प्रकटितवन्तः - चन्द्रः कियद्दूरे अस्ति, तस्य आकारः कः, सः केन वस्तुना निर्मितः इत्यादीनां विषये । किन्तु राजकुमारी स्वयमेव चन्द्रस्य आकारं वर्णं च उक्त्वा अस्माकं समस्यां दूरीकृतवती । अद्य रात्रौ यदा आकाशे चन्द्रः दृश्यते तदा राजकुमारी एव भवतः प्रश्नस्य उत्तरं दद्यात्'' इति दृढेन स्वरेण उक्तवान् ।

यदा रात्रौ चन्द्रस्य उदयः जातः तदा राजकुमारीप्रकोष्ठं गतः विदूषकः प्रकोष्ठस्य वातायनात् बहिः वृक्षस्य शाखानां मध्ये स्थितं चन्द्रं दर्शयन् दुःखमिश्रितेन स्वरेण राजकुमारीम् उक्तवान् - ''राजकुमारि ! चन्द्रः भवत्या कण्ठहारे शोभते । किन्तु आकाशेऽपि अन्यः चन्द्रः वृक्षस्य शाखानां मध्ये कथम् आगतः इति महती चिन्ता मम'' इति ।

तदा राजकुमारी साश्चर्यं विदूषकं दृष्ट्वा - ''एतद्विषये चिन्ता किमर्थं भवतः ? मम वदनात् कश्चन दन्तः पतति चेत् तस्मिन् स्थले अन्यः दन्तः प्रादुर्भवति । उद्याने स्थितानां वृक्षाणां फलानि पुष्पाणि च यदि अवचिनुमः तर्हि पुनः तत्र फलानि पुष्पाणि च प्रादुर्भवन्त्येव । चन्द्रः अपि एवमेव'' इति वदन्ती एव निद्रायां लीना जाता ।

''राजकुमारि ! आस्थानविदुषां सर्वेषां कश्चन अभिप्रायः । भवत्याः तु अपरः एव आशयः'' इति स्वगतं वदन् विदूषकः प्रकोष्ठात् बहिः आगतः ।

ततः विदूषकः राज्ञः समीपं गत्वा उक्तवान् - ''प्रभो ! राजकुमार्या स्वयमेव उक्तं यत् मम कण्ठे स्थितः चन्द्रः एव वास्तविकः, आकाशे शोभमानः चन्द्रः कृतकः इति । अतः एतद्विषये इतःपरं चिन्ता करणीया नास्ति भवता'' इति ।

एवं विदूषकः महतीं समस्यां सुलभतया परिहृतवान् इत्यतः सन्तुष्टः राजा स्वकण्ठे स्थितं हारमेकं विदूषकाय उपायनरूपेण दत्तवान् ।



# चन्द्ररहितायाः रात्रेः आरम्भस्य कारणम्

प्राचीने काले दक्षिणभारते कश्चन ग्रामः आसीत् । तस्मिन् ग्रामे श्रमशीलौ निष्कपटौ दम्पती वसतः स्म । तयोः अपत्यं न आसीत् । अतः तौ महत् दुःखम् अनुभवतः स्म ।

कदाचित् काचित् विचित्रा घटना घटिता । सा च आसीत् चन्द्रिकायुक्ता रात्रिः । वस्तुतः तु तस्मिन् काले समग्रे वर्षे रात्रौ चन्द्रः दृश्यते स्म । सा गृहिणी गृहस्य अन्तः उपविश्य पाके निरता आसीत् । तस्याः पत्युः आगमनकालः आसीत् सः । एकाकितया उपविष्टा सा चन्द्रं पश्यन्ती स्वगतम् उक्तवती - ''भोः चन्द्र ! अहो, आकाशस्य सुन्दरः पुत्रः भवान् । यदि अहं भवन्तं स्प्रष्टुं शक्नुयां तर्हि महान् सन्तोषः प्राप्तः भवेत्'' इति ।

चन्द्रः अपि तस्मिन् समये तां महिलां दृष्टवान् अकस्मात् । तस्याः वचनानि अपि श्रुतानि तेन । मृदुहृदयः सः चन्द्रदेवः लघु-बालकस्य रूपं प्राप्य तस्याः कुटीरस्य वातायनस्य पार्श्वे प्रत्यक्षः जातः ।

''अम्ब ! महती बुभुक्षा मम । खादितुं मह्यं किं वा दद्यात् भवती ?'' इति अपृच्छत् सः । 'अम्ब !' इति सम्बोधनं श्रुत्वा नितराम् आश्चर्यचकिता सा । रोमाञ्चनं प्राप्तवत्याः तस्याः मुखात् क्षणं यावत् किमपि वचनं न निर्गतम् ।

क्षणकालस्य अनन्तरं बहिः गत्वा सा तं लघुबालकम् उन्नीय अन्तः आनीतवती । ''सद्योनिर्मितम् अन्नम् अस्ति गृहे । क्षीरम् अपि अस्ति'' इति तम् अवदत् सा ।

''मदिष्टम् एव अस्ति अत्र'' इति उक्त्वा आनन्देन भुक्त्वा क्षीरम् अपि पीत्वा तस्याः अनुज्ञां प्राप्य ततः निर्गतवान् सः ।

''किं पुनरपि आगमनं भवेत् भवतः ?'' इति पृष्टवती सा ।

''कुतो न । निश्चयेन आगमिष्यामि'' इति उक्त्वा चन्द्रः ततः निर्गतवान् ।



अनन्तरदिने यदा सूर्यास्तः जातः ततः आरभ्य एव सा चन्द्रस्य आगमनं प्रतीक्षमाणा कुटीरस्य पुरतः स्थितवती । तस्याः नेत्रयोः स्थिता स्निग्धता प्रीतिः च चन्द्रं परवशम् अकरोत् । तस्मिन् अपि दिने चन्द्राय सा अन्नं क्षीरं च दत्तवती ।

एवमेव कानिचन दिनानि गतानि । पत्न्याः मुखे विलसन्तम् आनन्दं लक्षितवान् तस्याः

पतिः नितराम् आश्चर्यचकितः । एतादृशः आनन्दः तस्याः मुखे कदापि दृष्टः न आसीत् । अतः सः कदाचित् ताम् आनन्दस्य कारणं पृष्टवान् ।

तदा सा प्रवृत्तं सर्वं निवेद्य चन्द्रबालस्य आगमनं निवेदितवती ।

''चन्द्रदेवः भवत्याः पुत्रः भवितुं नार्हति सर्वदा । भवती तं पुत्राभिक्षां याचतु । यदि सः भवत्याः विषये सन्तुष्टः स्यात् तर्हि निश्चयेन पुत्रप्राप्त्यर्थं वरं दद्यात्'' इति उक्तवान् पतिः ।

तद्दिनस्य रात्रौ आगतः चन्द्रः गृहिण्याः मुखे स्थितं भावम् अवगच्छन् अपृच्छत् - ''अम्ब ! का आशा भवत्याः ?'' इति ।

''अयि, दैवीयवत्स ! अहम् एकम् औरसं पुत्रम् इच्छामि'' इति अवदत् सा ।

''अम्ब ! अहं भवत्याः एताम् आशां पूरयिष्यामि । किन्तु पुत्रप्राप्त्यनन्तरं भवत्या अहं न उपेक्षणीयः कदाचिदपि । किम् एतत् अनुमन्यते भवत्या ?'' इति अपृच्छत् चन्द्रः । अनन्तरम् उत्तरं किमपि अनपेक्षमाणः सः ततः निर्गतः ।

यदा औरसः पुत्रः एव प्राप्तः तदा सा गृहिणी महान्तं सन्तोषं प्राप्तवती । अतः तस्याः अन्तरङ्गं नितरां सन्तृप्तम् अस्ति इदानीम् । तथापि सा चन्द्रदेवविषये अल्पाम् अपि उपेक्षां न दर्शितवती । प्रतिदिनं प्रीत्या तं भोजयति स्म सा ।

कानिचन वर्षाणि गतानि । कदाचित् सा अस्वस्था जाता । 'मरणम् आसन्नम्' इति तया यदा ज्ञातं तदा सा पुत्रम् आहूय अवदत् - ''रात्रौ चन्द्रः आगमिष्यति । तस्मै अन्नं क्षीरं च भवता अवश्यं दातव्यं, यथा मया दीयते स्म तथा'' इति ।

ततः तस्याः प्राणाः निर्गताः । तस्याः पुत्रः अन्नं कृत्वा क्षीरं च उष्णीकृत्य चन्द्रस्य आगमनं प्रतीक्षमाणः स्थितवान् । चन्द्रः आगत्य मातरम् अन्विष्टवान् । तदा तस्याः औरसः पुत्रः अवदत् - ''सा परं धाम श्रितवती'' इति ।

तदा चन्द्रः महता खेदेन - ''अहो, मम अम्बा निर्गता'' इति उक्त्वा ततः अदृश्यः अभवत् । तस्मिन् दिने आकाशे चन्द्रः न दृष्टः केनापि ।

तस्मात् दिनात् आरभ्य मासे एकस्मिन् दिने भूलोकीयमातुः संस्मरणाय चन्द्रः आकाशे न दृश्यते । तदेव चन्द्ररहितं दिनम् उच्यते - *'अमावास्या'* इति ।





# प्रतीकारः

मगधराज्यस्य सीमायां मारदेवनामकः कश्चन ऐन्द्रजालिकः आसीत् । सः इन्द्रजालविद्यायां परिणतः । किन्तु सः स्वविद्यां जीवननिर्वहणाय न उपयुङ्क्ते स्म । अतः सः दरिद्रः एव आसीत् । लवः नाम कश्चन पुत्रः आसीत् तस्य । मारदेवः स्वपुत्रं सर्वां स्वविद्यां बोधितवान् ।

लवः तां विद्यां धनार्जनाय कीर्तिसम्पादनाय च उपयोक्तुम् ऐच्छत् । अतः सः ग्रामात् प्रस्थाय देशसञ्चारं कर्तुं प्रारभत । अनेके राजानः तस्य इन्द्रजालेन सन्तुष्टाः प्रभूतं धनम् अयच्छन् । एवमेव सर्वत्र अटन् सः तोरणदेशं प्राप्तवान् । तत्र राजास्थाने स्वस्य विद्यां प्रदर्शयितुम् अनुमतिं पृष्टवान् ।

तोरणदेशस्य राज्ञः बहुकालपर्यन्तम् अपत्यं नासीत् । बहुभ्यः वर्षेभ्यः अनन्तरं तस्य एकः पुत्रः जातः । तस्य राज्ञः पुत्रस्य जातकं दृष्टवद्भिः ज्योतिषिकैः उक्तम् यत् एषः राजपुत्रः द्वितीये वर्षे कस्यचित् ऐन्द्रजालिकस्य कारणात् हीनावस्थां प्राप्स्यति इति । तदा आरभ्य सः राजा ऐन्द्रजालिकस्य नामश्रवणात् एव भीतः भवति स्म ।

यदा एष लवः राज्ञः आस्थाने स्वविद्यां प्रदर्शयितुम् अनुमतिं पृष्टवान्, तदा राजा नितरां भीतः अभवत् । यतः तदा राजपुत्रस्य वयः आसीत् द्विवर्षात्मकम् । अतः पुत्रस्य अनेन ऐन्द्रजालिकेन कापि हानिः स्यादेव इति राज्ञः चिन्तनम् ।

एवं विचिन्त्य राजा मन्त्रिणम् उक्तवान् - ''एनम् ऐन्द्रजालिकम् इतः अन्यत्र प्रेषयतु'' इति ।

मन्त्री लवम् आहूय एकान्ते उक्तवान् - ''महाराजस्य इन्द्रजाले महती आसक्तिः । अतः भवतः विशेषातिथ्यं कर्तुम् आज्ञापितवान् अस्ति सः । अद्य भवान् राज्ञः आतिथ्यं स्वीकरोतु । श्वः भवतः इन्द्रजालप्रदर्शन-व्यवस्था भविष्यति'' इति ।

एतत् श्रुत्वा लवः सन्तुष्टः । मन्त्री लवस्य

ओमप्रकाशः



रात्रिभोजने विषं योजितवान् । प्रातःकाले सेवकद्वारा तस्य शवस्य अन्तिमसंस्कारमपि कारितवान् ।

राजास्थाने एषा वार्ता तथैव लीना अभवत् । किन्तु नगरे तु सर्वत्र व्याप्ता । केषुचित् एव दिनेषु एषा लवस्य मरणवार्ता तस्य पित्रा अपि ज्ञाता । अस्याः वार्तायाः सत्यांशं ज्ञातुं मारदेवः स्वयं ग्रामतः प्रस्थितवान् । लवः येन मार्गेण गतः तेनैव मार्गेण मारदेवोऽपि गच्छन् मार्गे तत्र तत्र स्वस्य विद्याम् अपि प्रदर्शयन् गतः । एवमेव तोरणदेशं गतः ।

तोरणदेशे लवस्य आगमनं केचन जानन्ति स्म । किन्तु सः कुतः आगतः, कुत्र गतः इति तु न जानन्ति स्म ते । नगरे एषा वार्ता अपि प्रसृता आसीत् यत् राज्ञः प्रासादे अतिथिरूपेण गतः लवः विषेण मारितः इति ।

मारदेवः सज्जनः एव । किन्तु विना कारणं स्वस्य पुत्रस्य मारणं श्रुतवतः तस्य मनसि प्रतीकारभावना जागरिता । अतः सः राज्ञः प्रासादं परितः एव अटन् आसीत् । यदा दासी राजकुमारं विहाराय आनीतवती तदा स्वविद्यया तां दासीं मूर्च्छितां कृत्वा सः तं राजकुमारम् उन्नीय स्वदेशम् आनीतवान् । गृहम् आगत्य तस्य राजकुमारस्य वेषभूषादिकं निष्कास्य एकस्यां पेटिकायां संस्थाप्य तं राजकुमारं सामान्यबालकम् इव पालितवान् ।

पुत्रस्य अपहरणं ज्ञात्वा राज्ञा महत् दुःखं प्राप्तम् । राजकुमारस्य पालनपोषणे स्वीकृतः सर्वः परिश्रमः व्यर्थः जातः । दुःखितं राजानं दृष्ट्वा मन्त्रिणा उक्तम् - ''महाराज ! भवान् दुःखितः मा भवतु । ललाटे लिखिता रेखा परिमार्ष्टुं न शक्यते । यः राजकुमारम् अपहृतवान् सः ऐन्द्रजालिकः एव स्यात् । यं बालकं वयं मारितवन्तः तस्य पिता, अन्यः तस्य कोऽपि दायादः वा एवं कृतवान् स्यात् । अस्माभिः स्वयमेव आपदि पतितम् इति मन्ये । किन्तु ज्योतिषिकाः उक्तवन्तः यत् राजकुमारस्य प्राणहानिः न भविष्यति इति । अतः शुभे काले सः स्वयमेव आगच्छेत्'' इति ।

लवस्य मृत्युः तस्य षोडशे वर्षे अभवत् । मारदेवः तं राजकुमारं षोडश वर्षाणि पोषितवान् । तदा तस्य मनसि प्रतीकारभावना पुनः जागरिता । सः राजकुमारेण सह तोरणदेशं प्राप्तवान् । तत्र गत्वा राजकुमाराय एकां पेटिकां दत्त्वा अवदत् - ''वत्स ! भवान् राजानं दृष्ट्वा - 'मम बाल्ये वयसि मम अग्रजः एनं देशम्

आगत्य भवतः आतिथ्यं प्राप्तवान् । तस्य आतिथ्यस्य विनिमयरूपेण मया एषा पेटिका समर्प्यते' इति उक्त्वा एतां पेटिकां राज्ञे ददातु'' इति ।

तदा राजकुमारः पृष्टवान् - ''मम अग्रजः आसीत् इति भवान् मां किमर्थं न उक्तवान् ?'' इति ।

''मया उक्तं कार्यम् आदौ समापयतु भवान् । ततः स्वस्य अग्रजस्य विचारः भवता स्वयं ज्ञायते'' इति उक्तवान् मारदेवः ।

राजकुमारः पेटिकां स्वीकृत्य राज्ञः दर्शनार्थं प्रासादं गतः । तत्र राजानं नमस्कृत्य - ''महाराज ! अहं मारदेवनामकस्य ऐन्द्रजालिकस्य पुत्रः । बहुभ्यः वर्षेभ्यः पूर्वं मम अग्रजः इन्द्रजालप्रदर्शनार्थम् अत्र आगतः आसीत् । तदा भवान् तम् आतिथ्येन सत्कृत्य तस्मै पारितोषिकमपि दत्तवान् । तस्य कृतज्ञतारूपेण एतां पेटिकां भवते समर्पयितुम् अहं मम पित्रा सूचितः'' इति वदन् तां पेटिकां राज्ञः पुरतः स्थापितवान् । राजा पेटिकाम् उद्घाट्य यदा दृष्टवान् तदा तस्याम् अपहृतस्य स्वपुत्रस्य अपहरणसमये धृतं वस्त्राभरणादिकम् आसीत् ।

राजा दुःखेन क्रोधेन च किङ्कर्तव्यतामूढः जातः । कोपवशात् सः स्वपुत्रमेव हन्तुम् उद्युक्तः । तदा मन्त्री राजानं कार्यात् निवारयन् - ''एतावान् कोपः न उचितः । यद्यपि एतत् वस्त्रादिकं राजकुमारस्य एव इत्यत्र नास्ति सन्देहः, तथापि कश्चन सन्देहः अवशिष्यते एव । यदि राजकुमारः तेन मारितः स्यात् तर्हि तदा एव एतत् वस्त्रादिकं प्रेषयेत् । अस्य बालकस्य वयः अपि राजकुमारस्य वयः एव'' इति उक्तवान् ।

ततः सः मन्त्री राज्ञः पुरतः तस्यां पेटिकायां स्थापितानि वस्तूनि एकैकशः निष्कासयन् अधः स्थापितं पत्रमेकं दृष्टवान् । तस्मिन् पत्रे लिखितम् आसीत् - ''राजन्, भवता मम पुत्रः मारितः । तस्य प्रतीकारः मया एवं साधितः'' इति ।

पत्रस्य विषयं ज्ञात्वा राजा नितरां खिन्नः । 'यदि मन्त्रिणा अहं न निवारितः स्यां तर्हि ऐन्द्रजालिकस्य उपायः फलप्रदः जातः स्यात्' इति चिन्तयन् सः स्वपुत्रं प्रीत्या आलिङ्गितवान् । स्वस्य दुष्कृत्यं स्मरन् पश्चात्तापेन दग्धः सः मारदेवम् आहूय क्षमां सम्प्रार्थ्य भूद्रव्यादिकं दत्त्वा तं सत्कृतवान् ।



# आर्यः

## राजकुमारस्य अज्ञातं रहस्यम्

सुमेधोराज्यस्य राजधानी शान्तिपुरी शान्तेः आश्रय-भूमिः । तस्य राज्यस्य शासकाः राज्ये सुखं कल्पितवन्तः आसन् प्रयत्नेन । इदानीन्तनः राजा स्वस्य पितृव्यपुत्रं सेनापतिं वीरसिंहं स्वसमीपम् आनाययति ।

चित्रम् - गान्धी अय्यः




किन्तु सेनापतिवर्य ! लुण्ठनात् प्राप्तं धनं चिरं न स्थास्यति ।

सेनापतिः वीरसिंहः तु महत्त्वाकांक्षी एव । सः स्वस्य दलपतीनाम् एकां गोष्ठीम् आयोजयति रहसि ।

आम् । अस्माकं खड्गानां धारा निशिता एव भवेत् सदापि ।

स्मरन्तु सर्वेऽपि खड्गविषये यत् कर्तव तत्र अस्माकम् आदरः स्यात् सदापि ।



भवन्तु सावधानाः ! भित्तयः अपि कर्णवत्यः भवन्ति कदाचित् ।
कश्चन सैनिकः सेनापतेः व्यवहारे सन्देहं प्राप्य राज्ञे वार्तां दातुम् उद्युक्तः जातः ।
गोष्ठी मध्यरात्रपर्यन्तं प्रवृत्ता महाराज !
मया राजा अवश्यं सूचनीयः ।
अस्तु, यदि अन्या वार्ता प्राप्येत तर्हि अवश्यं भवन्तं सूचयिष्यामि महाराज ।
ते राजकुमारस्य जन्मदिनाचरणस्य विषये चर्चां कुर्वन्तः आसन् इति भाति । आस्तां तावत्, गोष्ठी-विषयः अन्येन केनापि न ज्ञातव्यः ।

शान्तिपुर्याम् उत्सवस्य उत्साहः सर्वत्र ।

सर्वत्र दृश्यते – पताकानां तोरणानां च बन्धनम् ।

जनाः युवराजाय उपायनानि आनयन्तः सन्ति ।

अहो, द्वारेषु रक्षकाः सर्वथा न दृश्यन्ते ।

महाराज्ञि ! भगवान् एतं दीर्घायुष्मन्तं करोतु ।

मम गतिविधिम् अवरोद्धुम् अर्हः न कोऽपि अस्ति अत्र ।

जनाः सङ्गीतनृत्यादिषु नितरां निलीनाः सन्ति । राजधान्यां किं प्रवर्तते इत्यत्र ते अनवधानाः ।

अहं श्रान्ता अस्मि ।
अहम् इदानीं विश्रान्त्यर्थं प्रकोष्ठं गच्छामि ।

तावता राजा उद्विग्नः सन् महता वेगेन तं प्रकोष्ठं प्रविशति ।

आर्यपुत्र ! का वार्ता ?

दासीः झटिति बहिः प्रेषयतु भवती ।

भवान् मां कुत्र प्रेषयितुम् इच्छति आर्य ?

अस्माकं प्राणाः अपाय-ग्रस्ताः सन्ति देवि ! भवत्या एतत्क्षणे एव पुत्रेण सह इतः निर्गन्तव्यम् । गुप्तमार्गेण निर्गच्छतु भवती ।

-(अनुवर्तते)

# कालोऽयं विनोदस्य

## अन्विष्येतां समानाकारकौ

कुक्कुट्याः भोजनसमयः एषः । समानाकारकौ कीटौ खादितुम् इच्छति सा । किं तादृशयोः कीटयोः अन्वेषणे साहाय्यं कर्तुम् अर्हन्ति भवन्तः ?







## वर्णलेपनविनोदः

अरण्यराजः एषः दृश्यते वर्णरहितः । वर्णपेटिकाम् उद्घाट्य वर्णैः तं लिम्पन्तः सजीवम् इव कुर्वन्तु भवन्तः ।




III

## चित्रभागयोजनम्

मीना रमेशः च स्व भावचित्रस्वीकरणं प्रतीक्षेते । चित्रे ये भागाः न सन्ति तान् योजयन्तः चित्रस्य पूर्णतां कल्पयन्तु तावत् ।

IV



## अन्विष्यतां मार्गः

कपाली तिष्ठति तीरे । तदीयः पुत्रः क्रन्दति नौकास्थः । नौकासमीपं गमनाय कपालिनं मार्गम् उपदेष्टुं किं शक्नुयुः भवन्तः ?




# चित्रशीर्षिकास्पर्धा



MAHANTESH C. MORABAD



SOURA



**उपरितनं चित्रद्वयं दृष्ट्वा परस्परसम्बन्धिवाक्यद्वयेन चित्रशीर्षिकां किं भवन्तः प्रेषयितुं शक्नुयुः ?**

समपत्रे लिखिता चित्रशीर्षिका अधस्तनसङ्केताय प्रेषणीया –

**चन्दमामा (संस्कृतम्) 'अक्षरम्' ८ उपमार्गः, गिरिनगरम्, बेङ्गलूरु – ५६००८५.**

युक्ता शीर्षिका एतन्मासस्य २५ तः पूर्वं प्रेषणीया । सर्वश्रेष्ठायै शीर्षिकायै रू.१००/- पुरस्काररूपेण दास्यन्ते ।
पुरस्कृता शीर्षिका मासद्वयानन्तरं प्रकाशयिष्यते ।

### पुरस्कृता शीर्षिका





**पश्यत ममैतं वामनवेषम् ।**
**शृणुत मत्तो वा भाग्यविलासम् ।**

### अभिनन्दनानि

**'जुलै'मासस्य चित्रशीर्षिकाप्रेषकः –**

**सि.वि.एस्. राव्**
*क्वार्टर्स् नं – बि – ३, सैनिकशाला (एस्.ओ.)*
***बिजापुरम् – ५८६ १०२, कर्णाटकम्***

**मनोविनोदस्य उत्तराणि – (पृ. ६४,६५)**

१. समानाकारकौ कीटौ – सि.इ.चित्रस्थौ समानौ ।
३. चित्रभागयोजनम् – चित्रखण्डेषु सङ्ख्याक्रमः इत्थम् –
५,६,७,३,४,२,१

Printed and Published by B. Viswanatha Reddi at B.N.K. Press Pvt. Ltd., Chennai - 600 026 on behalf of Chandamama India Limited, No. 82, Defence Officers Colony, Ekkatuthangal, Chennai - 600 097. Editor : Viswam

